पलाशशाखया तत्प्राजनविधिश्च। तयोरनडुहो पर्यन्यवर्तनाया प्राशस्त्या-भिधानम्, तत समन्त्रक तयो शकटे योजनम्, तन्मन्त्रव्याख्यानञ्च। तत शकटस्य पश्चात्पश्चाद् गमनादिकम्, तत्तन्मन्त्रविधिव्याख्याने च। तत सुब्रह्मण्याह्वानम्, तदाह्वाननिगदव्याख्यानञ्च।

अथ प्रतिप्रस्थाता अग्नीषोमीय पशु मादाय, शालाया पुरोदेशे गच्छत सोमस्याभिमुख स्थापयेदिति विधि, तस्य च पश्वादेर्द्रव्यादि-प्रशसनम्, तत्र स्थापने मन्त्रविधानञ्च।

अथाध्वर्योस्तच्छकटोपस्तम्भनविधि, तन्मन्त्राख्यानम्, तद्व्याख्यानञ्च। ततोऽध्वर्य्वादीना चतुर्णा मत्विजा शालामन्वानयनम्, तदानन्त्या औदुम्बरीस्तम्भाभिद्यमविधानम्, मन्त्रेण तदभिमर्षनम्, मन्त्रेणैव तदुपरि छाया जिनास्तरणम्, तत्र समन्त्रक सोमासादनम्, तस्य मन्त्रपाठपूर्वक शाला-प्रवेशनम्, तत्समीपे उदपात्रस्थापनञ्चेति।

( इ्य॰ २ब्रा॰ )

अथातिथ्येष्टिविधि। तत्र प्रथम सोमस्यातिथिस्वरूपत्वाख्यानम्, ततोऽतिथित्वात्तदर्थव्यापनञ्च। ततो हविरासादनम्, तत्रावपनादिकम्, नवकपालपुरोडाश, कार्ष्मर्यमया परिधय, आश्ववाल प्रस्तर, ऐक्षवौ विधृती चेति विधानानि।

अथाग्निमन्थनविधि। तत्राधिमन्थनशकलनिरूपणम्, दर्भतरुण-कयोर्विधानम्, अधरारणिकरणम्, अरण्योराज्यविलापयोर्होतृव्यापारवाचनक तथा प्रशंसनञ्च। ततो मन्थविधि, अनुप्रहरणविधि, अनुप्रहृतेऽग्नौ होमविधिश्च। अस्या इष्टेरिडान्तत्वविधानम्, अयाजुयाजनिषेधश्चेति।

( इ्य॰ ३ब्रा॰ )

अथ तानूनप्त्रविधि। तत्राख्यायिका, तत्र समवस्थानप्रदर्शनादिकञ्च। तानूनप्त्राथाज्यग्रहणादिविधानम्, तानूनप्त्र माज्य सर्वे स्पृश अपि तत्

यजमानायैव दातव्य मिति निर्णय, यजमानेन क्रियमाणस्य सामीप्यस्य दैवे ह्रत मानैव मूल मित्याख्यानञ्चेति ।

( ३प्र० ४ब्रा० )

अथावान्तरदीक्षाव्यप्रायश्चित्तविशेषविधि । तत्र प्रथम माख्यायिकया तन्मात्रतारणम्, ततोऽवान्तरदीक्षाकल्पनप्रकार, ततस्तद्विधानम् । तत्र समिदाधानम्, तत्र चाख्यानम्, समिदभ्याधानम्, इष्टापि दीक्षाऽऽतिवत् थाऽऽप्यागनार मकृत्यादिसमञ्जनस्य कर्त्तव्यतावगमनञ्च ।

अथ मदन्त्युपस्पर्शनपूर्वकराजाप्यायनविधि । तत्र चानुष्ठेयपदार्थक्रम विषये ब्रह्मवादिचोद्योद्भावनम्, आप्यायनप्रशंसनम्, विशेषतस्तस्य सारघ मधुकल्पनया मलसारत्वपरिहाराद्यात्मना च, प्रशंसनम्, तदाप्यायनमन्त्रव्याख्यानञ्च ।

अथ निह्नवविधि । तत्कालनिर्णय, तन्मन्त्रविधिव्याख्याने च । ततोऽध्वर्युकर्तृकप्रैषादिविधानञ्चेति ।

( ३प्र० ५ब्रा० )

अथोपसदिष्टिविधि । तत्र प्रथम तत्कालविधानम्, तत्राख्यायिका च । तत प्रधानयागत्रयार्थाज्यग्रहणप्रकारोपदेशादिकम्, उपसदा नित्यविधानम्, तत्प्रशंसनम्, तन्मन्त्रनयविधानञ्च । ततो द्वादशोपसत्पक्षे कर्त्तव्यविधानादिकञ्चेति ॥

---

( ४प्र० १ब्रा० )

अथ वेदिनिर्म्माणविधि । तत्र स्थाननिरूपणम्, वेद्या औचित्यप्रमाणम्, आयामस्य पश्चाद्भागावधिप्रदर्शनम्, प्राचीनावधिप्रदर्शनम्, अक्षद्वय-

निरूपणम्, यज्ञाग्न्यादिप्रशंसनम्, प्रागायामे यन्नादिर्धारणम्, अंशिभाग स्योद्गलविधानम्, यज्ञभागस्य छूहत्वविधानञ्चेति ।

अथोत्तरवेदिनिर्माणविधि । तत्रोत्तरवेदिव्याख्यानविध्यर्थाख्यायिका, तद्विधानञ्च । तन्मानादिसाधनद्रव्यविधानम्, तत्प्रसङ्गात् कश्चिन्नियम-विधिश्च । तत्स्थान्तानिर्माणप्रकारोपदेश, तत्र खातया मृद्याऽऽला-दुत्तरवेदि प्रति चतुर्धरणस्य विधानम् ततोऽनुव्याहनम्, तन्मन्त्रस्य तात्पर्याख्यानम्, वेदा चन्द्रिरभ्युक्षणम्, तत्र सिकतावकिरणम्, तथोत्तर-वेदेर्यन्त्रियद्रवयाख्यया प्रच्छादनविधिश्चेति

( ४प्र० २ब्रा० )

अथोत्तरवेद्या समिधप्रयमनप्रयोगविधि । तत्रेध्माभ्याधानम्, इध्मान्त-स्याथ उपयमन्यवयमनादिकम्, प्रोक्षण्यादानम्, विनयनम्, तन्मन्त्रे विशेष विधानम्, आघारयोनि, परिधीना परिधानञ्चेति ।

( ४प्र० ३ब्रा० )

यज्ञभूमे पुरस्तात्कारलवर्णनम् । हविर्धानप्रवर्तनाभ्यनुज्ञायमनाय सावित्र होमविधि, तन्मन्त्रव्याख्यानञ्च । ततोऽध्वर्यु पत्न्या समञ्जनम् । तत प्रतिप्रस्थातु उत्तरहविर्धानस्य दक्षिणवर्त्मन्या हिरण्याधानपूर्वक चतु र्गृहीताज्यहोमविधानम्, हविर्धानयो प्रवर्तनकाले मन्त्रवाचनम्, तन्मन्त्र व्याख्यानञ्च । ततो हविर्धानयो स्थापनस्थाननिर्णय, तत्र स्थापनानन्तर तयो क्रमादभिमन्त्रणे उपस्तम्भनमेध्युपहननच्छदिर्निधानानि, छदिर्निधान मन्त्रस्याधियज्ञपरतया व्याख्यानञ्च । ततो रराट्युपस्पर्शनम्, सूचीसमन्त्रया रज्ज्वा तद्ग्रीवनम्, तत्र ग्रन्थिकरणम्, तदभिमर्शनञ्चेति ।

( ४प्र० ४ब्रा० )

अथ सोमाभिषवार्थोपरवखननविधि । तत्र प्रथम तत्खननस्य प्रयो-जनकथाख्यानम्, तत्खननाय अभ्र्यादानादिकम्, चतुर्णां खाताना

चत्वारो मन्त्राः, मृद्दुलोपणम्, खननप्रमाणम्, खातावमर्शनञ्च। ततो-ऽध्वर्युयजमानयोर्मिथो हस्तसमर्पणम्, अवटप्रोक्षणम्, अवटेषु प्रोक्षणी-शेषावनयनप्रश्नमनम्, तेषामवटानामुपरि बर्हिराच्छादनञ्च। ततोऽधि-षवणफलकयोरुपधानम्, पर्यूहणम्, परिदृंहणम्, परिकर्षणञ्च। तत-स्तदुपरि अधिषवणचर्मास्थापनम्, तत्र ग्राव्णां निधानञ्चेति।

( ४प्र० ५ब्रा० )

अथौदुम्बरीविधिः। तत्र प्रथमं तस्याः सदोमध्ये स्थाननिरूपणम्, ततो-ऽवटखननार्थं मन्त्रादानम्, अवटपरिलेखनम्, तत्खननम्, तत्रावटप्रागुद्देशे औदुम्बर्याः स्थापनम्, बर्हिर्भिस्तस्याच्छादनञ्च। तत औदुम्बरीप्रोक्षण-साधनानां सह यवमाद्भिर्विधानम्, ताभिस्तत्प्रोक्षणम्, प्रोक्षणीशेषस्योद-कस्य तत्रावटेऽवनयनम्, तदुपरि बर्हिरास्तरणञ्च। तत औदुम्बर्या उच्छ्रय-णम्, अवटमध्ये प्रक्षेपणम्, पर्यूहणम्, पर्यूषणम्, अपां सुमनिनयनञ्च। ततस्तामभिमृश्य यजमानवाचनम्, होमविधानम्, तद्धोममन्त्रव्याख्यानञ्च। ततस्तत्र छदिर्निधानम्, छदिषां नवसङ्ख्यात्वेन प्रशंसनञ्चेति।

अथ सदोनिर्म्माणादिविधिः। तत्र प्रथमं सदसः उदगायततविधानम्, सदोनिर्म्माणप्रकारोपदेशः, सदसः परिश्रयणम्, तन्मन्त्रव्याख्यानम्, तत सदसो द्वारशाखादीनां सीवनादिविधानञ्च। ततस्तत्र प्रथमं आग्नीध्रस्य स्थाननिर्णयः आग्नीध्रस्यार्चिःपरिहारहेतुत्वेन प्रशंसनञ्चेति।

---

( ५प्र० १ब्रा० )

अथ धिष्ण्यविधिः। तत्र प्रथमं सोपर्याणकाद्देवाख्यानम् तद्दृष्टान्तमुखेन सोमयागस्यान्तिकसंस्थाप्रतिपादनाय पुरुषस्य कन्त्रमपुतत्वाभिधानम्, ततो धिष्ण्यानां सोमरक्षकत्वाभिधानम् प्रसङ्गात् सोमयागस्य देवमनुष्य-पितृदारैश्च सर्वेषामपि सिद्धिहेतुत्ववर्णनञ्चेति।

( ५प्र० २ब्रा० )

अथ वैसर्जनहोमविधिः। तत्र प्रथमं अग्नीषोमीयप्रयोगविधानम्। तत्र अग्नीषोमीयाज्यपृषदाज्ययोर्ग्रहणस्य विधानादिकञ्च। तत आहवनीये वैसर्जनहोमविधानम्, तन्मन्त्रतात्पर्यकथनम्, पूर्वोक्तेध्मोद्यमनादीनामति-देशनम्, प्रैषवैकल्याभिधानञ्च। ततो ग्रावादीनां सम्भाराणां मार्जालीये समुपस्थापनम्, तदायत्तं मन्त्रवाचनादिकम्, अश्वयोर्ग्रहप्रोक्षणादिकम्, तृतीयवैसर्जनहवनञ्च।

अथोत्तरवेदेः पश्चाद्देशे बर्हिषि स्रुचं आसाद्य हविर्धानस्य प्रवेशन-विधिः। तत्र दक्षिणहविर्धानस्य परिश्रिते मध्यप्रदेशे कृष्णाजिनस्योपरि सोमनिधानम्, तदुपस्थानम्, ततो हविर्धानप्रदेशात् निष्क्रमणञ्च। तत आहवनीये समिदभ्याधानम्, प्रसङ्गाद् दीक्षिताक्षभोजननामग्रहणयो-र्वैसर्जनहोमं यावत् निषेधश्चेति।

( ५प्र० ३ब्रा० )

अथ यूपनिर्म्माणविधिः। तत्र प्रथमं यूपं छेत्स्यन्नाहवनीये होमः, ततः कुशतरुणकेन संवेष्ट्य तत्काष्ठस्य छेदनम्, प्रथमच्छिन्नस्य शकलस्य यूपावटे प्रक्षेपार्थं ग्रहणञ्च। ततो यूपस्याधःपातने प्रागादिदिक्पातविकल्पनम्, प्रच्यवमानस्य तस्यानुमन्त्रणम्, तदैवाश्वनहोमविधिस्तत्प्रशंसनञ्च। अत्रैव यूपमानस्य बहुविकल्पविधानम्, यूपस्याष्टाश्रित्वविधानञ्चेति।

( ५प्र० ४ब्रा० )

अथ यूपस्थापनविधिः। तत्र प्रथमं अवटनिर्माणार्थं अभ्रिग्रहणम्, यूपशकलस्यावटे स्थापनम्, शकलप्रास्तनहोमश्च। ततो यूपाञ्जनम्, यूपाग्र-परिमृषणम्, अभिष्ठाञ्जनम्, यूपोच्छ्रयणम्, यूपमानम्, तन्मन्त्रस्याधियज्ञ-परतया व्याख्यानम्, यूपपर्यूहणम्, यूपं सम्मारभ्य मन्त्रस्य वाचनम्, तन्म-

मन्त्रस्य तात्पर्याख्यानञ्च । ततस्तयाशोदीक्षणम्, तन्मन्त्रतात्पर्यान्वाख्यानञ्च । ततो रशनामस्थिच्छेदनम्, तथा यूपशकलावगूहनम्, स्वरुणामविवर्धनञ्च । ततो लोकत्रयजयात्मना यूपस्य प्रशंसनम्, यूपपूर्वार्द्धमानादिकथनम्, यूपस्याग्न्याश्रितत्वाभिधानम्, यूपे निगडस्य स्वरोर्वस्तञ्च प्रतिपत्तिकर्मत्वेन यूपप्रतिनिध्यात्मना होमस्याभिधानञ्चेति ।

( ५प्र० ५ब्रा० )

अथ यूपैकादशिनीविधिः । तत्र प्रथमं तदुपोद्घातः, दर्शनात्मकत्वे-मोपश्रयप्रशंसनम्, उपशयनिधानम्, ग्रन्थिप्रमुखानां सर्वेषामेव यूपानामेकादशीवोक्रमण मिति विचारश्च । ततो एकादशिनीपक्षे यूपोच्छ्रयणमविच्छान्तादि, प्रसङ्गात् पात्नीवतपशुप्रयोगविधानञ्चेति ।

( ५प्र० ६ब्रा० )

अथ पशूपाकरणविधिः । तत्र प्रथमं पशुनियोजनाय यूपस्य कर्त्तव्यताख्यापनार्थाख्यायिका । ततोऽग्नीषोमीयपशोर्यूपे नियोगादिविधानम्, तत सार्वदाशोपाकरणविधानञ्चेति ।

---

( ६प्र० १ब्रा० )

अथ पशुपाशविधिः । तत्र प्रथमं पशोर्बन्धनाय पाशकरणम्, तन्मन्त्रतात्पर्याख्यानञ्च । ततस्तस्यैव पशोः प्रोक्षणम् उपोक्षणम्, ललाटाञ्जनञ्च । ततो जुह्वग्न्योः सादनम्, प्रवराभ्यावरणम्, पुनराश्रावणम्, यजमानप्रवरनिमदार्थाभ्याख्यानञ्चेति ।

( ६प्र० २ब्रा० )

अथ पशुतदङ्गपशुप्रयोगः । तत्र प्रथमं होतुर्होतृषदने उपवेशनविधानम्, ध्यानविधि, तदेवाद्यशनविधानादिकञ्च । तत्र आज्याद्यां

यूपशकलाभ्यां पशोर्ललाटोपस्पर्शनादिविधानम्, पशोः पर्यग्निकरणविधिश्च। तत अग्नीध्रप्रतिप्रस्थात्रध्वर्युयजमानानां शामित्रदेशगमनस्य विधानम्, अध्वर्योस्तृणादयग्रहणादिविधिः, मैत्रावरुणप्रैषविधिः, अध्रिगुप्रैषविधानम्। ततो विशसनप्रदेशेऽध्वर्युकर्तृकतृणास्तरणादिविधानम्, संज्ञपनप्रकारविधानञ्चेति।

( ६प्र० ३भा० )

अथ पत्नीकर्मविधिः। तत्र प्रथमं संज्ञप्ते पशौ पत्नीवाचनम्, तन्मन्त्रतात्पर्याख्यानञ्च, ततः पशोः प्राणमुखनासाचक्षुरादीनां पत्न्या प्रक्षालनादिकञ्च।

अथ पशुवपोत्खेदविधिः। तत्र प्रथमं वपाख्यपशोः कार्यार्थमयत्नविधानम्, तस्याः परिवासनादिकञ्च। ततो वपापाकप्रकारोपदेशः, वपानुप्रासनम्, वपायागप्रशंसा चेति।

( ६प्र० ४भा० )

अथ पशुपुरोडाशविधिः। तत्र पशुपुरोडाशस्य देवताविधानम्, तदागन्तव्यप्रशंसा च। ततो शमितुः पशुविशसनम्, शमितृसमासनञ्च। अथाग्रे हृदयाभिघारणम्, अवदानक्रमविधानादिकम्, प्रसङ्गात् मनोता नामनिर्वचनञ्च। ततो वसाहोमविधानम्। ततो वनस्पतियागविधानम्, स्विष्टकृद्योगप्रकाराख्यानञ्च। ततो वसाहोमशेषेण दिग्व्याघारणम्, पशोः सम्मर्शनम्, तन्मन्त्रव्याख्यानञ्चेति।

( ६प्र० ५भा० )

अथोपयाजविधिः। तत्रैकादश प्रयाजाः, एकादशानुयाजाः, उपयाजाश्चैकादश इति पशोरेकादशानीकादीनां विधानम्, अथानुयाजार्थसमवदानग्रहणादिविधानञ्च। स्विष्टकृतः अनुयाजानां यूपविष्टात् पुर

( ७प्र० ४ब्रा० )

अथ सवनीयपश्वर्थप्रयोगविधिः। तत्र प्रथमं सोमोपावहरणम्, तन्मार्गनिरूपणम् तन्मन्त्रविधानम्, तद्व्याख्यानञ्च। तत उपावहृतस्य सोमस्योपस्थानञ्चेति।

अथ प्रातरनुवाकप्रयोगविधिः। तत्र प्रथमं प्रातरनुवाकस्य समयकालनिर्णय, प्रातरनुवाकस्य तत्प्रतिगरविषये मतान्तरोपन्यास, समिदाधानञ्च। तत एकधनानयनार्थं होमविधानम्, तद्धोममन्त्र, तद्व्याख्यानञ्च। ततश्चतुर्णां प्रैषाणां विधानम्, तद्व्याख्यानञ्च। होत्रादीनां मेकधनानयनार्थं मार्गनिरूपणम्, तद्व्याख्यानाख्यानञ्च। तत प्रचरणीहोमसाम्यस्यापु होमविधानम्, तन्मन्त्रविधि, तद्व्याख्यानञ्च। ततो हुतायामाहुत्यां अपसारण्यादिकम्। मैत्रावरुणचमसेनोन्नयनम्, तत्र विचारश्च। ततोऽग्निस्मारणानन्तरं तेषा मेव होत्रादीनां देवयजने पुनरागमनविधानम्, तत आग्नीध्रस्यकस्य होतृचमसम अध्वर्युदानाय निग्राभ्यासु आवयनार्थं पूर्वेद्युराहृता वसतीवरीरूर्ध्वोपादिति विधानञ्चेति।

( ७प्र० ५ब्रा० )

अथ सोमाभिषवप्रयोगविधिः। तत्र प्रथमं दारुमयफलकयोरुपरि चर्मोपवेशनम्, अधिषवणीयावादानम्, तन्मन्त्रविधानम्, तस्य व्याख्यानञ्च। ततो ग्रावस्थापनम्, सोमोन्मानम्, तत्सङ्ख्याविधानम्, सोमाभिमर्षणम्, निग्राभ्योदकैः सोमसेचनम्, प्रसङ्गात् निग्राभ्याशब्दनिर्वचनम्, सोमोपमर्जनम्, निग्राभ्याभिषवनम्, सोमप्रहरणम्, तन्मन्त्रविधानम्, तस्य व्याख्यानञ्च। एवं त्रिरभिषवणम्, त्रिः सम्भरणम्, त्रिस्त्रिर्निर्वदनम्, मन्त्रजपश्च। ततो निग्राभ्योपायनम्, प्रसङ्गाद् यजमाननिर्वचनम्, सोमप्रार्थनात्मको मन्त्रसद्भावश्च। अथ निग्राभ्याभ्यो होतृचमसेन यजमानयोः यजमानोपक्रम विधानञ्चेति।

## ॥ अथ समालोच्यवचनसूची ॥

"अग्निं मथित्वाऽग्नावग्निं जुहवाम" ५. ६. ४, ५, ६।

"अग्नि वै यज्ञ" ५. ४. १६.

"अग्निरेतसं वै हिरण्यम्" २. ४. ३, ९. ५. २, ७. ५. १।

"अग्निरेव देवानां मूलमास, सहस्रधा ह्यस्यस्यास महतामाम्" ५. १. २१.

"अग्निर्वेद्याधिपथ" २. १. ७.

"अग्निर्वा अहः, सोमो रात्रि, अथ यदन्तरेण तद् विष्णु, एतद्वै परिश्रद्‌मानं संवत्सरं करोति" ३. ४. १५.

"अग्निर्वै गायत्री" ७. ५. १०. [२. ६.

"अग्निर्वै देवतानां मुखं, प्रजनयिता स प्रजापतिः, स उ एव यजमान" ७.

"अग्निर्वै यज्ञः" ३. ४ १८.

"अग्निर्वै सर्वा देवता" १. ३. १.

"अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति" ६. २. १८.

"अग्निर्हि रक्षसा मपहन्ता" ६. २. ६.

"अग्निर्ह्येव ब्रह्म" २. १. ८.

"अग्निर्ह्येव यज्ञ" २. १. ८.

"अग्ने नय सुपथा राये ०—० इत्यग्नि मेवैतत् पुरस्तात् करोति" ५. २. ११.

"अग्नेर्वा एतद् वैश्वानरस्य भस्म यत् सिकता" ४. १. ३६.

"अङ्गानि वै विश्वानि धामानि" ३. १. १४.

"अथ देवा वीणा मेव छन्द्वा वादयन्तो निगायन्तो निषेदुरिति वै ते वयं मास्याम इति स्त्रा प्रलोभयिष्यामह इति" २. ३. ६.

"अथ पुनरेत्याहवनीय मभ्यावृत्यासते। नेदस्य सपत्नोऽप्यमानस्याप्यसा असामेति। तस्य न कूटेन प्रघ्नन्ति, मानुषं हि तत्। नो एव पश्चात्कर्णं, पितृदेवत्यं हि तत्। अपि तस्य वैव मुखं नमयन्ति,

मेध्यं वा कुर्वन्ति तत्। नाह अहि मारयेति, मानुषं हि तत्'' ६ २. १५

"अथ यत् पुरा गायन्ति, यथा हविषोऽहुतस्य नाश्नीयादेव तत्; तस्माद् दीक्षितस्य नाश्नीयात्" ५. २. २१ [२७.

"अथ यद्दीक्षितोऽश्रव्यं वा व्याहरति, क्रुध्यति वा तस्मिन्नेवाकरोति" २. १.

"अथाग्न्याधानावाजन्ति, तौ यदि प्राञ्चौ स्यातां अन्यतरो वा प्राङ्तत्र विद्याद् वर्षिष्यत्ययमः पर्जन्यो वर्षिमान् भविष्यतीत्येतद् विज्ञानम्" ३. १. ११.

"अथाभयेनाग्नाष्ट्रेय पशुं नयन्ति, त वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते, प्रतिप्रस्थातारमध्वर्युं, अध्वर्युं यजमानः। तदाहुः,— नैव यजमानेनान्वारभ्यो मृत्यवे ह्येनं नयन्ति, तस्मान्नान्वारभेतेति। तदन्वारभेत; न वा एतं मृत्यवे नयन्ति, यं यज्ञाय नयन्ति'' ६. २. १०.

"अथैभ्यः सूपं दक्षिणा नायनन्, सं प्रत्यस्कन्न्" ७. १. १९.

"अयोक्षिखति सुसस्याः कृषीकृधीति" १ ५. २०.

"अध्वर्युः पृच्छति,— यजमान! किं भक्षेति, भद्र मित्याह; तन्नौ सहेत्युपाध्वर्युः। ०—० यजमानः पृच्छति,— अध्वर्यो! किं भक्षेति, भद्र मित्याह, तन्न इति यजमानः'' ४. ४. १७

"अग्निम्धस्य व्रतो नामकामेत्'' ४. १. १७.

"अनृतं हि वदेयुरेकं ह वै देवा व्रतं चरन्ति सत्य मेव, तस्मादेषां जित मनपजय्यं, तस्मादयशः। एवं ह वा अस्य जित मनपजय्य मेवं यशो भवति, य एवं विद्वान् सत्यं वदति" १. २. ८.

"अन्तरिक्षं वा अनु रक्षश्चरत्यमूल मुभयतः परिच्छिन्नं, यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्ष मनुचरति। तद् वातेनैव संविदानामन्तरिक्षाद् गोपायेत्येवैतदाह यदाहोतोरन्तरिक्षात् यजुर्वेदेन वातेनेति ( वा॰ सं॰ ६. ११. ९. )'' ६ ९. १२.

"अन्नं वा उर्गुदुम्बरः" २ १. २०

"अन्नं वै क्षत्रियस्य विट्" २. ५ ८

"अन्नं वै सोम" ७ २ ८, ६.

"अन्नं सोम" ३ १ २८

"अमूल वा इद मुभयत परिच्छिन्नं रक्षोऽन्तरिक्ष मनुचरति, यथायं
पुरुषोऽमूल उभयत. परिच्छिन्नो ऽन्तरिक्ष मनुचरति" १. ३. १५.

"अमृत मायुर्हिरण्यम्" ६. ४. २९.

"अमृता आप" ७ ५. १६.

"अमेध्यो वै पुरुषो यदनृतं वदति" १. ३. १८.

"अयं (मासम्) रक्षोऽह्यमानो न क्षीयते" ६. ४. १०.

"असि वै ग्रास इत्याचक्षते" ६. २. ४.

"असुर्या वा एषा वाग् या अन्ते, नेदितासुर्यां वाग् वदात्" ४. ३. १७

"अस्य सर्वस्य ब्राह्मणो मुखम्" ७. २. १४.

"अस्य सलिलस्य मध्येऽश्व श्वेत. स्थाणौ सेवते (अस्यार्थ —) वेदिर्वै
सलिल ०—०, अग्निर्वा अश्व श्वेत. ०—०, यूप: स्थाणु ०—० ।
तस्य वालो न्यमञ्जि न ममु वालो धुनोति ०—० । (अस्यार्थ —)
रसना हैव सा" ५. १. ४, ५,

"आत्मान वै तानेव दिधत्ती सोमक्रं देवेभ्य आत्मानं निष्क्रीणीय्वेति"
"आत्मा वै मनो हृदयम्, प्राण एवदाश्यम्" ६. ४. ८. [५. १. ८.
"आधीतयजु र्वीत्याचक्षते" १. ४. ११, १४

"आपो रेत" ७. १. १

"आपो वै प्राणा" ६. ३. ४.

"आपो वै यज्ञ" ७. १. १.

"आपो वै समुद्र" ६. ५. ११

"आपो वै समुद्रोऽस्वैवैतदक्षितिं दधाति, तस्मादाप स्तावति भोगे
भुज्यमाने न क्षीयन्ते" ७ ४ २७

"आपो ह वा ओषधीनां रसस्तस्मादोषधय एवस्य खादिता न धिन्वन्ति;

ओषधय उ ह्यापः रसस्तस्मादापः पीताः केवल्यो न धिन्वन्ति ; यदैवोभय्यः संसृष्टा भवन्त्यथैव धिन्वन्ति, तर्हि सा सरसा भवन्ति" ४. ५. ७.

"आपो ह वै छन्दे जन्मस्तेनैवैतद्वीर्येणापः स्यन्दन्ते" ७. ५. २५.

"आसीनं वा एन मेष आगच्छति ; स आगत उत्तिष्ठति, तन्मिथ्या-करोति" २ ६. १३.

"इदं हि यदा वर्षन्त्यथौषधयो जायन्ते, ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति रसाद्रेतः, रेतसः पशवः ; तद् यत एव सम्भवति, यतश्च जायते, तत एवैतन्मेध्यं करोति" ६. १. ४.

"इदं ह्याहुरिन्द्रो यजमान इति" ३. ३. १५.

"इन्द्रः सर्वा देवताः" ९. ३. २.

"इन्द्रश्रेष्ठा देवाः" ३. ३. २

"इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दि-न्नहल्यायै जारेति ( श० ब्रा० १. १. २. )। तद्यान्येवास्य चरणानि, तैरेवैन मेतत् प्रमुमोदयिषति" ३. १. १८.

"इन्द्राग्नी हि विश्वे देवाः" १. ३. १४.

"इन्द्रियं वीर्य मिन्द्र" ७. २. १६.

"इन्द्रियं वै वीर्य मिन्द्र इन्द्रियेणैव तद्वीर्येण" ७. २. १५.

"इन्द्रो वै यज्ञस्य देवता" ३ ४. १८, ५. ४. १७; ७. ५. ५.

"इमा प्रजाः पुनरभ्यावर्तं प्रजायन्ते" ६. ५. १८.

"इयं वा अदितिः •—• ऊर्द्ध्वं ह्येतस्यै दिक्" २. २. १६.

"इयं वै पृथिवी भूमा" २. ३. १६.

"इयं वै पृथिव्यग्निर्वैश्वानरः" ७. १. ४.

"इयं वै पृथिव्यदितिः" २. ४. ३.

"इयं वै पृथिव्यदितिः सेयं प्रतिष्ठा" ३. १. १.

"इयं द्यौवादिति" २. २. ६.

"एतानेव वै योनिगर्भे बिभर्ति" १. ५. २८.

"उदीचो मेव दिशम् पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तरा हि वाग् वदति कुरुपञ्चालत्रा वाग्घ्येषा विदानेनोदीची ह्येतया दिशं प्राजानन्नुदीची ह्येतस्ये दिक्" ४. २. १५.

"उदीची वै मनुष्याणां दिक्" ४. ५. २३.

"उदीची हि मनुष्याणां दिक्" २. ३. २२.

"उर्वशी वा अप्सरा, पुरूरवाः पति, अथ यत् तस्मान्मिथुनादजायत तदायुर्वैव" ३. २. २२.

"उष्णीष माहरेति" २. ५. ३.

"उष्णीषेण विग्रथ्नाति •—• अथ मध्येकुल्याकाश्यं करोति" २ ५. १८.

"स्वयं ह वै एकधो जायमान एव स्वयोरात्मना जायते" ५. १. १६.

"ऋषिविद्याघ्नमुक्तम्— 'मनसा सङ्कल्पयति, तद्वात मपि गच्छति। वातो देवेभ्य आचष्टे, यथा पुरुष ते मन'–इति" ३. ३. ७.

"एकं ह वै देवा व्रतं चरन्ति सत्य मेव; तस्मादेषां जित मनपजय्यं, तस्माद्यशः। यशं ह वा अस्य जित मनपजय्यं मेवं यशो भवति, य एवं विद्वान्सत्यं वदति" ३. ३. ८.

"एको ह्येवायं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः, प्राण उदानो व्यान इति" १. ३. १०.

"एतद्ध्यात्मान मौपगवीकाश्यम्" ५. १. ७.

"एतावान् वै पुरुष" १. ४. ७३.

"एते गन्धर्वाः सोमरक्षा कृशानुरिमे धिष्ण्या इमा होत्रा" ४. १. ८.

"एते वै मधितारो यत् सूर्यस्य रश्मयः" १. ३. २४.

"एष वा यजेन्द्रो भवति यद्यजमान" २. ६. १०.
"एष वा इन्द्रो य एष तपति" ३. ३. १५.
"एष वै प्रजनयिता यग्मुख्कर" ५. ५. ८.
"एष वै सविता य एष तपति ...... प्रतीची ह्येतस्य दिक्" २. २. १८

"कः प्रावरनुवाकस्य प्रतिगर इति, जाग्रद्वैवाध्वर्युरुपासीत, स यन्निमिषति स हैवास्य प्रतिगर ; तद् तथा न कुर्याद्, यदि निद्रायादपि कामं स्वप्यात्" ७. ४. ११.
"किं तद् यज्ञे क्रियते येन प्राण सर्वेभ्योऽङ्गेभ्य प्रिय इति" ६. ५. २.
"क्षत्र वा इन्द्र" ७ २. १६, १८.
"क्षत्रं वै सोम" ७. ४. ३.
"क्षत्रं वै सोमो विडन्या ओषधय" २. ५. ८.
[७. ४. ७.
"क्षत्रिय मायन्त मिमा प्रजा विश प्रत्यवरोहन्ति त मधस्तादुपासते"

"गर्भो वा एष भवति यो दीक्षते" २. ६. १२.
"गृहा वै पत्न्यै प्रतिष्ठा" २. ४. १०.

"चन्द्र ते, वस्त्रं ते, छाया ते, धेनुस्ते, मिथुनौ ते गावौ, तिसस्ते-ऽन्या" २. ६. ४.

"त (सोमं) वै दशभिरेव कौशीयान्नादशभि·" २. ६. १८.
"तत् (त्वाष्ट्र पशु) न सक्षापयेत्, पर्यग्निकृत मेवोत्सृजेत्" ५. ५. ८.
"तदाहु । सोमाकुर्यात्पशुमिनमिश्रे, यशगा मेवादायाक्षस्येमरेत्वाभिधाय वियुङ्गादिति । तद् तथा न कुर्याद् यथाधर्म विरत्यथा विक्लेवैदेव तत् । तस्मादितदेवानुपरीयात्" ५. ६. ७.
"तद् ह याज्ञवल्क्य चरकाध्वर्युरनुव्याजहार,— एव अदेन्तं प्राणं वा यम

मन्तरगादध्वर्युं प्राश एव हास्यतीति, स ह स्म बाहू अन्वेत्याह,— इमौ पलितौ बाहू कश्चिद् ब्राह्मणस्य वचो बभूवेति न तदाद्रियेत" ६. ३. २५.

"तद्धिरण्मया ब्राह्मणो व्याख्यायते सौपर्णीकाद्रवं यथा तदास" २. १. १.

"तद्वै वयसा मोजिष्ठं बलिष्ठ यच्छ्रेण" ३. १. १५.

"तपसा वै लोकं जयति। तदस्यैतत् परं परं एव वरीयस्तपो भवति, परं-परं श्रेयांसं लोकं जयति" ३. ५. २७.

"तमसो ह वा एषा प्रजापतेः सम्भृता यदशा" २. ६. ८

"तस्मादप्येतर्हि ०—० योषा ०—० य एव नृत्यति, यो गायति, तस्मिन्नेवैता निमिश्लतमा इव" २. ३. ६.

"तस्मादाहुः पुण्यलोक ईजान इति" ५. १. १५.

"तस्माद् योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत" २. ४. १३.

"तस्य यन्निखातं, तेन पितृलोकं जयति; अथ यदूर्ध्वं निखातादा रशनायै, तेन मनुष्यलोकं जयति, अथ यदूर्ध्वं रशनाया आ चषालात्, तेन देवलोकं जयति; अथ यदूर्ध्वं चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वा, साध्या इति देवास्तेन तेषां लोकं जयति" ५. ४. २५.

"तस्य हि न हन्तास्ति न वधो येनेदं सर्वं स्तृणुत तस्मा विश्वा भुवनानि तस्थाविति" ६. १. ४.

"तस्मै गन्धर्वा वेदानेव प्रोचिर इति वै वय विद्मेति वय विद्मेति" २. ३. ५.

"तस्यैवैतत् प्रायश्चित्तिं कुरुते, सोऽग्निरेव स्वयं विपल्ययते" ६. ४. २, ३.

"तिर इव वै गर्भाः" ६. १. ६.

"त्रियो वा अग्नि" ७. २. १८.

"ते (द्यावापृथिव्यौ) रसवत्या उपजीवनीये इमाः प्रजा उपजीवन्ति" ४. ५. २१.

"ते विदुरयं वै नो विरक्तमोऽस्यैव रूप मसाम" ३. ४. ८.

"तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्त पराबभूवु" १. ५. २३.

"त्वष्टा वै पशूनां मिथुनानां रूपकृत्" ५. ६. ११.
"त्वष्टा वै सिक्तं रेतो विकरोति" ५. ५. ८.

"दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणा प्रतिष्ठिता एता-
वान् वै पुरुष" ६. २. ३.
"दिवि हि सोम" ७ ५. २
"दीक्षितं दाक्षमं योपायन्ति, नेन्नोऽपहरानिति" ५. १. १४.
"देवाश्च वा असुराश्चोभये प्राजापत्या, प्रजापते' पितुर्दाय मुपेयुर्मन एव
देवा उपायन् वाच मसुरा" १. ५. १८.
"देवो वै सोम" ७. ५. २.
"देवो वै सोमो दिवि हि सोम" ३. ४. १३.
"देव्यो ह्याप" ७. ४. २५.
"दैव्यो वा एता विशो यत् पशव" ५. ६. ६.
"द्वय वा इद न तृतीय मस्ति सत्यं चैवानृतञ्च; सत्य मेव देवा अनृतं
मनुष्या" २. ५. २, ["सत्यं वै"] ७. ५. १.
"द्वय वा इद सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुन प्रजननम्, ०—० मिथुन
मेवैतत् प्रजनन क्रियते" ६. ५ ७.

"धेन्वनडुहयोर्नाश्नीयात्" १. २ २१.
"धेन्वनडुहयोर्नाश्नीयात्। तदु होवाच याज्ञवल्क्योऽश्नाम्येवाह मंऽसलं चेद्
भवतीति" १. २. २१.

"न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच (ऋ० सं० ६. ४७.)"
"न दीक्षित काष्ठेन वा नखेन वा कण्डूयेत" १. ५. ३१. (७. ५. २४.
"न प्रतीचीमभिरा शयीत" १ १. ७.
"न ब्राह्मणो क्षेप्येद्" १. ५. २४.

"नवाक्षरा वै गायत्री, अष्टौ तानि यान्यन्वाह, प्रणवो नवमः" २. २. १५.

"न वै देवा सर्वेणैव संवदन्ते" १. १. १०.

"न वै देवाः स्वपन्ति" २. १. २२.

"न वै यज्ञ प्रत्यक्ष मिवारभे यथार्थं दण्डो वा वाम्रो वा; परोक्षं वै देवाः परोक्षं यज्ञ" १. ३. २५.

"न स्वा भ्रातृीयेरन्; य एषां परस्तरा मिव भवति, स एनाननुव्यवैति; ते प्रियं द्विषता कुर्वन्ति, द्विषद्भ्यो रध्यन्ति, तस्मान्नर्त्तीयेरन्" ३. ६. ३.

"न दक्षिणं प्रतिगृह्णीयात्, पुरुषमानो हि घ्नतीति" १. ३. ४.

"नाभिदघ्ना भवति, अत्र वा अन्नं प्रतितिष्ठति" ३. १. २८.

"नाभिदघ्ना भवति, अतो एव रेतस आगम." ३. १. २८.

"विरुत्तदक्षिणां न प्रतिगृह्णीयात्" ४. १. २५.

"नैव मन्युं चरन्त मभ्यस्य मियात्, न स्वपन्त मभ्युद्दियात्" २. १. २७.

"नो हास्ते गोर्भय स्यात्" १. २. १७.

"पञ्च वा ऋतव संवत्सरस्य" ७. ५. ११.

"पवित्रं वा घाप" १. २. ११.

"पशवो वै पूषा" ७. २. १०, १२.

"पशवो वै रायः" २. ४. ८.

"पशवो वै वसु" ५. ६. ११, १६.

"पशोः प्राणानद्भि पद्युपस्पृशति, ०—०, तदस्मिन्नेतान् प्राणान् दधाति; तथैतस्यैव मेव देवाना हविर्भवत्यस्त समृतानाम्" ६. ६. ४.

"पश्चाद्वरीयसो पृथुश्रोणिरिति वै योषां प्रशंसन्ति" ४. १. ११.

"पितृदेवत्य सोमः ०—० दक्षिणा ह्येतस्य दिक्" २. २. १७.

"पुत्रो वै वीरः" २. ४. १२.

"प्रत्यक्षिते,— यथयमयो मेवास्मिंल्लोके, दधाना मन्तरिक्षे, इदिक्षौ दिवि" २. ५. ३.

"पुरुषसम्मितो यज्ञ" १. ४. २१.

"पुरुषो यज्ञः" १. ४. २२.

"प्रजापतिर्यज्ञ" २. १. ४.

"प्रजापतिर्वै •—• सवसौयानेवेष्टाभवत्" ७. २. १—४.

"प्रजा वा पशवो" ७. ५. २१.

"प्राची हि देवाना दिक •—• उदीची हि मनुष्याणा दिक, •—• ; अथो मध्यम दक्षिणायै •—• एषा वै दिक् पितृणाम्" ५. ३. १२.

"प्राची हि देवानां दिक् •—• उदीची हि मनुष्याणा दिक् •—• एषा (दक्षिणा) दिक् पितृणाम्" १. १. २.

"प्राची हि देवानां दिक् •—• या दक्षिणा दिक् सा पितृणां •—• सा प्रतीची सा सर्पाणां •—• योदीची सा मनुष्याणाम्" १. १ ७.

"प्राची ह्येतस्य (अग्नेः) दिक्" २. १ १९.

"प्राणोदानौ वै मित्रावरुणौ" ४. ५. १९

"प्राणो वै पशुर्यावद्धवेव प्राणेन प्राणिति तावत् पशुरथ यदस्मात् प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यं शेते" ६. ४. १५, ८. ५. ५

"प्राणो वै हृदयम्" ६. ७. १५.

"प्राकृता वै गर्भा उल्बेनेव जरायुणेव" २. ६. १२.

"बड्डौ वै यजुर्श्चायौ" ४ २. ११, ५. १०

"ब्रह्मचारिण आचार्यं गोपायन्ति, स्वतन् पशून् नेत्नोऽपहरा-निति" ५. १. १५.

"ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ" १. ४. १५

"ब्रह्म वै बृहस्पति" ३. ४ २, ५. ६ १२, ७ २. ११, १४.

"ब्राह्मणोऽयम्नमाने द्वितीय नाम कुर्वीत, राध्नोति हैव य एवं विद्वान् द्वितीय नाम कुरुते" ५ १. १६

"ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः" १. १. ८.

"मनुष्यानन्वु पशवः, देवानन्वु वयांस्योषधयो वनस्पतयः" ५. १. १६.

"मनो देवा मनुष्यस्याजानन्ति" ३. ४. ६.

"महान्त्येव गोर्महिमेत्यध्वर्युः ; गौर्वै प्रतिधुक्, तस्यै शृतं, तस्यै शरस्, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनम् •—• एतान्येव दश वीर्याणि" २. ६. २, ३; २. ५. १, ३.

"महितो वै सोमो देवो हि सोमः" २. ६. ४.

"मिथ्या वा आपः" १. १. १०.

"य सर्वासा मोषधीना रस आसीत्, त यवेष्वदधुः ; तस्माद् यत्रान्या ओषधयो म्लायन्ति, तदेते मोदमाना वर्द्धन्ते" ४. ५. १०.

"य इमे शीर्षंश्चत्वारः कूपा इमाविव द्वा विमौ द्वौ" ४. ४ १.

"यजमानो वा आमिक्षा" ५. ४. १६.

"यज्ञो वै विष्णुः" ५. ३. २, ८.

"यज्ञो वै विष्णुः। स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषा मियं विक्रान्ति-रिद मेव प्रथमेन पदेन पस्पाराथेद मन्तरिक्षं द्वितीयेन दिव मुत्त-मेन" ५. २. ३.

"यज्ञो हि कृष्णः, स य स यज्ञस्तत् कृष्णाजिनम्" १. ५. २८.

"यज्ञो हि विष्णुः" ५. २. १६.

"यत् ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे •—• स एता-स्तिस्रस्तनूरेषु लोकेषु विन्यधत्त" ७. ५. १२.

"यद् वैकङ्कतं भवति चक्षुष्येवैतच्चक्षुर्दधाति" १. ३. १२.

"यत्र वा अर्हन्त मागतं शापयन्ति क्षुध्यति वै स तत्र तथा ह्याभचितो भवति" ३. ४. ३

"यथा राज्ञ आगतायोदकं माहरेदेव मेतदिति" ३. १. ३१.

"यथा ऋचे वा [illegible] वा, तदेव मानुषं हवि" १. २. २.

"यथा राज्ञोऽराजानो राजकृत सूतग्रामण्य, एव मम्य छन्दांस्यभित साधयानि" ३. २ ७

"यथा वा अङ्गारोऽग्निना ध्मात स्यात्" ७. ४. २६.

"यदग्नौ जुहोति, तद्देवेषु जुहोति, तस्माद् देवा सन्ति। यत् सदसि भक्षयन्ति, तन्मनुष्येषु जुहोति, तस्मान्मनुष्या सन्ति। अथ यद्धविर्धानयोर्नाराशंसः सीदन्ति, तत पितृषु जुहोति, तस्माद् पितरः सन्ति" ५, १. २५

"यदा वै स्त्रियै च पुंसश्च सन्तप्यतेऽथ रेत सिच्यते, तत तत प्रजायते, पराङ्गुपार्षक्ति पराङ्ग्येव रेत सिच्यते" ४. ३ १६.

"यदि दीक्षित मार्तिर्विन्देद् येनैवात कामयेत तेन भिषज्येद् यथात्रतेन भिषज्येदिति" २ १. १५

"यद् गायत्री श्येनो भूत्वा दिव सोम माहरत्, तेन सा श्येन सोमभृत्" ७ ५. १०

"यद्वीर किञ्चाभन्त्युद् एवेद सर्व प्रतितिष्ठति" ४. ५. १

"यद्दै प्रतिरूप तच्छिल्पम्" १ ५ ५.

"यद्दै शुक्ल यज्ञस्य, तदाग्नेयम्, ०—० यद्दा ष्णाढं यज्ञस्य, तत् सौम्यम्" २ २ ८, १०

"या प्रोक्षण्य परिशिष्यन्ते ता चत्वटे ध्वनयति,—'शुन्धन्ता लोका पितृषदना इति, पितृदेवत्यो वै कूप खात" ५ ४. ६.

"या ते धामान्युश्मसि गमध्यै ०—० इत्येतया निष्टुभा मिनोति" ५ ४. १५.

"यावती वै वेदिस्तावती पृथिवी" ५ ५ १

"यावद्धेव प्राणेन प्राणिति, तावद् मस्तु, अथ यदास्मात् प्राणोऽपक्रामति, दार्वेव तर्हि भूतोऽनर्थ्यं शेते" ६ ५ ९

"यूप एव पशु मालभन्ते, नर्ते यूपात् कदाचन" ५ ६ २।

"ये वै ब्राह्मणा शुश्रुवांसोऽनूचानास्ते विप्रा" ४ ३ १२

"यो दीक्षते तस्य रिरिचान इवात्मा भवति" ६ २. २.

"यो दीक्षते, स विष्णुर्य यजमानस्य" १. ५. १७.

"यो दीक्षते स देवाना मेको भवति १. १. ८, १०, २. १. १६, २२.

"यो ह्येवेम मानुषं ब्राह्मणं हन्ति स ह्येव परिचक्षते" ७. ५. १७.

"यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण

इत्येव ब्रूयात् ब्राह्मणो हि जायते यो यज्ञाज्जायते। तस्माद्राजन्यं

सवनकृत इत्याहेरणी चैव सवनकृतेति" १. ५. ४०.

"यो वै गर्भस्य काष्ठेन वा लोष्ठेन वा कण्डूयेदपास्यन् म्रियेत्" १. ५. ३१.

"यो वै ज्ञातोऽनूचान स समृद्ध" ३. ५. २६

"यो वै विष्णु सोम' स" ३. १. २१, ५. २ १६.

"योषा हि स्रुग्" ७. ५. २१.

"योषायै वा इमा प्रजा प्रजायन्ते" ७. ५. २५.

"योषा वा पत्नी" ७. ५. २१.

"योषा वा ऋक्" ७. ५ २५

"योषा वा स्रुग्भोला" ७. ५. २५.

"योषित्कामा वै गन्धर्वाः" ७. ३. २०.

"रक्षसा ह्येष भागो यदसृक्" ६. ३. १४.

"रश्मयो ह्यस्य विश्वे देवा" ७ ३. ६. १२

"रसो वै वसा •—• रसोऽद्यमानो न क्षीयते" ६. ४. ३०.

"रसो वै वसाहोम" ६. ४. २५.

"रेत सोम" २. ५. १, ३. १. २८, ३. ४. ११.

"रेतो वै सोम" ७. १. २

रेतसो हि पयस" ५. ६. १२

"लघूमन्या स्कन्द्या यशोऽर्छति" ३ ३. २५.

"लिङ्गयेव हि यः •—• अभिहृत्य कल्पयति" ६. ३ ३०.

'वचो वा व्याव्यम्" २ ४ ३ २ ५ १ ३ ५ ६ ४ ३ १५

'वचो वा व्यान्यम् रेत सोमो नेद् तच्चेयाज्येन रेतः सोम हिनस्ति नीति" ५ २ १७ ७ ४ २६

"वचो हि वा व्यान' १ २ ६

वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन् यद् वनस्पतयो न स्यु' २ १ १०

'वनेषु अन्तरिक्ष ततानेति । वनेषु = वृक्षाग्रेषु वीयं वै वाजा, पुमासो ऽर्वन्त, ह्रत्सु क्रतु मनुर्मनोजव, विक्षु = प्रजासु, दिवि सूर्यो सूर्यो हित, गिरिषु हि सोम" ३ १ ७

"वरुणा वा एषा यदप्सु" २ ३ १८ ६ १ १

'वागेव सुपर्णी इय कद्रू" ५ १ २

"वागेवाग्नि, प्राणोदानौ मित्रावरुणौ चक्षुरादित्य, श्रोत्र विश्वे देवा" २ १ १३

"वाग्वि यज्ञः' ४ १ २३

"वाग् वै यथा ग्लक्ति ०—० उदीची ह्येतस्यै दिक्' २ २ ८ १५

"वाग् वै रेवती सा यद् वाग् बहु वदति तेन वाग्रेवती" ६ २ १२

'वाग् वै सरस्वती' ७ २ ७, ६

'वाचे हि धीयते यज्ञाय हि धीयते यचो हि वाग्, धीयितो ह वै नामैतद् यद् दीक्षित इति" २ १ ३०

'विद्वासो हि देवा ५ ६ १०

"विशो ग्रावाण' ७ ४ ३

"विशो विश्वे देवा" ७ २ १६ १८

"विशो वै मरुतो भूमो वै विट्' ७ २ १०

'विष्णु परार्क्र" १ ३ १

'वृत्रो वै सोम आसीत तस्यैतच्छरीर यद् गिरयो यदश्मानस्तच्छरीरे णैवैन मेतत् समर्धयति ग्रावज करोति' ७ ५ २

"वृत्रो वै सोम आसीत्, तस्यैतच्छरीरं यद् गिरयो यदश्मानस्तदेषो-
शना नामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकिः" ३. ४. १३.

"शृङ्गं वै तद् यज्ञस्य यन्मानुषम्" ३. १. २१.

"शरीरं ह्येवास्य (अग्नेः) पीतुदारु •—• मांसं ह्येवास्य गुग्गुलु •—•
गन्धो ह्येवास्य सुगन्धितेजनम्" ४. २. १८.

"ग्रीष्मो वीर्यं हरन्ति, घनसोदावहन्ति" २. ६. १७.

"श्येताक्ष्या धाया नेयात्, सा स्यादप्रवीता •—• अवग्राकूटा काणा कर्णी-
च्छिन्नालासाग्रपा" २. ४. १५.

"संवत्सरो वै प्रजापतिः" २. १. ४.

"स इन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश" १. ५. २६.

"स एव शीर्षन् भक्तिस्थोऽनुकस्य मध्या तस्मात् स वान्त इव तस्य शीर्षेन
सम्भवमत् तस्मात् तं नाश्नीयात् मनुष्यैतदभिवान्तम्" ६. ४. ११.

"सत्यं वै शुक्रम्" ७. ४. २५.

"समानजन्म वै पयश्च (आज्यश्च) हिरण्यञ्च, उभयं ह्यग्निरेत-
सम्" २. ३. ८.

"सम्बन्धान्ताविव हीमौ लोकौ" १. ५ २.

"स यानुपधिरन्ति, तेनामिंल्लोके प्रत्यर्घा भवन्ति, अथ याननुद्दिशन्ति
तेनामुष्मिंल्लोके प्रत्यर्घा भवन्ति" ५. १. २३.

"सर्वे वै विश्वे देवाः" ७. २. १३.

"सर्वा ह वै देवता पशुमालभ्यमानमुपसङ्गच्छन्ते मम नाम ग्रहीष्यति
मम नाम ग्रहीष्यतीति, सर्वासां हि देवतानां हविः पशु-
स्तासां सर्वासां देवतानां पशौ मनांस्योतानि भवन्ति तान्येवैतत्
प्रीणाति" ६. ४. १४.

"सर्वे ह वा एते स्वपतोऽपक्रामन्ति प्राणा एव न" २. १. २१.

"सविता वै देवानां प्रसविता" २ ५ १०, ४ ३ १०, ७ २. २०,
४ १४, ५ ३.

"स हिरण्य पदे निधाय जुहोति, न वा अनग्नावाहुतिर्हूयते; अग्निरेतस
वै हिरण्यम्, तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति" ३. ४ ३.

"सा यत् त्रि संवत्सरस्य विजायते, तेन प्रजापतेर्वर्षं" ३ ६ ८

"सुवासा एव बुभूषेत्" १ ३. १६

"श्वोन श्वोन मिति, शिव शिव मित्येवैतदाह" ३ ६ १०.

"स्तान आग्नीध्रीये वम्भारे हस्त सुहस्त कृशानवेते व सोमक्रयणा ०—०
एतानि वै धिष्ण्यानां नामानि" ३ ६. ११.

"हविर्वा एष देवानां भवति यो दीक्षते, तदेव मन्त्रजम्भ आदधाते,
तत्पुनरात्मान निष्क्रीणीते" ३ १ २१

---

## ॥ अथ कर्म्मसूची ॥

| कर्मनाम | प्र॰ भा॰ ख॰ | कर्मनाम | प्र॰ भा॰ ख॰ |
|---|---|---|---|
| अग्निप्रणयनम् | ४ २, १ | आग्नावैष्णवेष्टि | . १. ३ १. |
| अग्निमन्थनम् | ३ २ १८ | आज्यग्रहणम् | ५. २ ६. |
| अग्निष्टोम | १. १ १ | आतिथ्येष्टि | .. ३ ४ १. |
| अत्युपयाजयाग . | ७ १ १ | आग्रयणहोम | . ५. ३. १५ |
| अधिश्रयणम्. .. | ४. ४ १ | आसन्दीकरणम् | ... ३ १. २६. |
| अनुनिष्क्रमणम् | ३. ४ १ | | |
| अनुयाजयाग | ६. ५ ८ | उत्तरवेदिव्याघारणम् | ४ १ २६ |
| अपाम्प्रणयनम् | १. ३ १ | उपयाजयाग | .. ६. ५ ११. |
| अवान्तरदीक्षा | ३ ४ १. | उपसदिष्टि ... | ... ३. ५. १. |

| कर्म्मनाम | प्र॰ खा॰ क॰ |
|---|---|
| औदुम्बरीनिधानम् . | ४ ५. १ |
| औदग्रभणहोम | १. ४. १. |
| कृष्णाजिनदीक्षादीनि | १. ५. १. |
| तानूनप्त्रम् ... | ३. ३. १. |
| दीक्षाङ्गकर्म्माणि ... | १. २. १. |
| दीक्षिताभ्यञ्जनम् .. | १. ३. १०. |
| दीक्षिताभ्यञ्जनम् .. | १. ३. ७. |
| दीक्षितावेदनम् ... | १. ५. १६. |
| धिष्ण्यनिर्म्माणम् .. | ५. १. १. |
| निग्राभ्योपायनम् | ७. ५ २०. |
| निह्नवनम् .. .. | ३. ४. १६. |
| पत्नीपान्नेजनम् .. | ६. ३. १. |
| पत्नीसंयाज . .. | ५. १. ६. |
| पशुपुरोडाशश्रपणम् | ६. ४. १. |
| पशुसंज्ञपनम् .. | ६. २. १५ |
| पशूपाकरणम् . | ६. १. १. |
| पश्वालम्भनम् . | ५. ६. १ |
| पश्वेकादशिनीकरणम् | ७. २. १. |
| पृषदाज्यग्रहणम् ... | ६. ५. ७. |

| कर्म्मनाम | प्र॰ खा॰ क॰ |
|---|---|
| प्रयाजयागाः ... ... | ६. २. १. |
| प्रवराश्रावणम् ... | ६. १. ५. |
| प्रातरनुवाक ... | ७. ४. ७ |
| प्रायणीयेष्टि ... | २. २. १. |
| यूपनिधानम् . ... | ५. ४. १. |
| यूपप्रस्थनम् ... ... | ५. ३. १. |
| यूपैकादशिनीकरणम् | ५. ५. १. |
| राजाप्यायनम् ... | ३. ४. ११. |
| वपायागः ... ... | ६. ३. १६. |
| वसतीवरीग्रहणम् ... | ७. ३. १. |
| वसाहोम ... ... | ६. ४. ३० |
| वाग्यमनम् ... | १. ३. २७. |
| वाग्विसर्ज्जनम् ... | २. १. १. |
| व्रतदानम् ... ... | २. १. १६. |
| व्रतश्रपणम् ... ... | २. २. १०. |
| वेदिनिर्म्माणम् ... | ४. १. १. |
| वैसर्ज्जनहोम ... | ५. २. २. |
| शालानिर्म्माणम् ... | १. १. १. |
| शालाप्रवेशः ... | १. १. ११. |
| सदःपरिश्रयणम् | ४. ५ २४. |

| कर्म्मनाम | प्र० ग्रा० क० | कर्म्मनाम | प्र० ग्रा० क० |
|---|---|---|---|
| सदोनिर्म्माणम् ... | ४. ३. १. | सोमाभिषव ... | ७. ५. १. |
| सवनीयपशुकर्म ... | ७. ४. १. | सोमासादनम् ... | ३. १. ३०. |
| सामिधेनीप्रयोग ... | १. ३. ६. | सोमोन्मानम् ... | २. ५. १. |
| सुब्रह्मण्याह्वानम् . . | ३. १. १७ | सोमोपनहनम् ... | २. ५. १८. |
| सोमक्रयणम्... ... | २. ६. १०. | | |
| सोमक्रयणवस्थापनम् | २. ३. १. | हविर्द्धाननिर्म्माणम् | ४. ३. ७. |
| सोमनिधानम् ... | ४. २. १८. | हविर्द्धानप्रवर्त्तनम् ... | ४. ३. १०. |
| सोमपयानम्... . . | २. ६. १ | हविर्द्धानप्रवेशनम् ... | ५. २. १७ |
| सोमपर्याणहनम् . | ३. १. ७. | | |


## ॥ अथर्षिनामादिसूची ॥


| नाम | प्र० ग्रा० क० | नाम | प्र० ग्रा० क० |
|---|---|---|---|
| अङ्गिरसः | १. ५. १०, १४, ४. १. १२ द्र० | कद्रू ... | २. ३. १ ; ५. १. २. |
| अप्सरा (उर्वशी) | ३ २. २२. | कुरुपञ्चालाः ... | २. २. १५. |
| अहल्या . ... | ३. १. १८. | कौशिक (ब्राह्मण) | ३. १. १९. |
| आदित्या ... | ४ १. १६ द्र० | गन्धर्व (विश्वावसु) | २. ३. २. |
| | | गन्धर्वाः (सोमरक्षाः) | ५. ४. ६. |
| | | गौतम .. .. | ३. १. १९. |
| उर्वशी (अप्सरा) | ३. २. २२. | गौरावस्कन्दी... .. | ३. १. १८. |
| ऋषय | १. ४ ४, २. १. ३, १९, २८. द्र० | चरकाध्वर्यव ... | ६. ३. २४. |
| | | चिंकतुद (गिरिः) ... | १. ३. १२; |

| नाम | प्र० ब्रा० कं० | नाम | प्र० ब्रा० कं० |
|---|---|---|---|
| पुरूरवाः ( पति ) | ३. २. २२. | वाचक्नवी ... ... | १. १. ४. |
| | | विश्वावसु (गन्धर्वः) | २. ३. २. |
| ब्राह्मण | १.१.१०, १.५.४०, ६० | वृषगणः ... | ३. १. १८. |
| ब्राह्मणा (विश्वगोत्रा) | ४. ३. ५. ६० | वैश्य | १. १. १० ; १. ५. ४०. |
| मेधातिथिः ... ... | २. १. १८. | शूद्रः ... ... .. | १. १.,१०. |
| म्लेच्छ ... .. ... | १. ५. २४. | | |
| | | समुद्र ... .. | ६. ५. ११. |
| याज्ञवल्क्य ... | १. १. ४. ६० | सात्ययज्ञः ... ... | १. १. ४. |
| | | सुपर्णी | २. ३. १ ; ५. १. २. |
| रघुः ... ... ... | ६. ३. १५. | सोमरक्षा (गन्धर्वाः) | ५. १. ६. |
| राजन्य | १. १. १० ; १. ५. ४०. | | |


---

## ॥ अथ सर्वसूची ॥


| | पृ० | | पृ० |
|---|---|---|---|
| अथ सम्पादकोक्ति ... | क, ख | अथ कण्डिकासूची ... .. | ३ |
| अथ मूलसङ्केतनम् .. | ग, घ | अथ विषयसूची ... ... | १३ |
| अथ प्रपाठकसूची ... . | १ | अथ स्मर्तव्यश्लोकवचनसूची | ३८ |
| अथाध्यायसूची ... | १ | अथ कर्मसूची ... ... | ५३ |
| अथ ब्राह्मणसूची ... .. | २ | अथर्षिनामादिसूची ... | ५५ |


---

अथ

# तृतीयकाण्डम् ।

॥ अथ प्रथम प्रपाठक ॥

॥ प्रथम ब्राह्मणम् ॥

॥ अपि वा प्रथमाध्याये प्रथम ब्राह्मणम् ॥



॥ हरिः ॐ ॥

देवयजनं जोषयन्ते । स यदेव वर्षिष्ठं स्यात् तज्जोषयेरन्यदन्यद्भूमेर्नाभिशयीता*तो वै देवा दिवमुपोदक्रामन् देवान् वा एष उपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीता†वरतर इव हेष्टा स्यात् तस्माद्यदेव वर्षिष्ठं स्यात् तज्जोषयेरन् ॥ १ ॥

तद्वर्षं सत् समं स्यात् । समं सदविभ्रंशि स्याद्-

---

*, † तिशयीता'-इति सा० सम्मत इति डा० वेबर ।

विश्रꣳसि सत् प्राक्प्रवणꣳ स्यात् प्राची हि देवानां दिगथो उदक्प्रवण मुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रित मिव स्यादेषा वै दिक् पितृणाꣳ स यद्दक्षिणाप्रवणꣳ स्यात् क्षिप्रे ह यजमानोऽमुं लोक मियात्तथो ह यजमानो ज्योग् जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रित मिव स्यात् ॥ २ ॥

न पुरस्ताद्देवयजनमात्र मतिरिच्येत। द्विषन्तꣳ हास्य तद् भ्रातृव्य मभ्यतिरिच्यते कामꣳ ह दक्षिणतः स्यादेव मुत्तरत एतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात् परिशिष्यते क्षिप्रे हैवैन मुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥ ३ ॥

तद्ध होवाच याज्ञवल्क्यः। वार्ष्णाय* देवयजनं जोषयितु मैम तत्सात्ययज्ञोऽब्रवीत्सर्वा वा इयं पृथिवी देवी देवयजनं यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेदिति† ॥ ४ ॥

ऋत्विजो हैव देवयजनम्। ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना विद्वाꣳसो याजयन्ति सैवाह्वलैतन्नेदिष्ठतमा‡ मिव मन्यामह इति ॥ ५ ॥

---

* 'वाष्र्णेय'–इति ग। † 'याजयेदिति'–इति ग।
‡ 'नेदिष्ठमा'–इति ग।

तच्छालां* वा विमितं वा प्राचीनवꣳशं मिन्वन्ति। प्राची हि देवानां दिक् पुरस्ताद्वै देवा प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठन् जुहोति ॥ ६ ॥

तस्माद् ह न प्रतीचीनशिरा शयीत। नेद्देवानभि प्रसार्य शया ऽइति या दक्षिणा दिक् सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा उदक्रमुः सैषाहीना योदीची दिक् सा मनुष्याणां तस्मान् मानुषे ऽउदीचीनवꣳशा मेव शालां व्वा विमित व्वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवꣳशा नादीक्षितस्य ॥ ७ ॥

तां वा ऽएतां परिश्रयन्ति। नेदभिवर्षादिति न्वेव व्वर्षा देवान् वा ऽएष ऽउपावर्त्तते यो दीक्षते स देवताना मेको भवति तिर ऽइव वै देवा मनुष्येभ्यस्तिर ऽइवैतद्यत् परिश्रितं तस्मात् परिश्रयन्ति ॥ ८ ॥

तत्र सर्वं ऽइवाभिप्रपद्येत। ब्राह्मणो वैव राजन्यो वा व्वैश्यो वा ते हि यज्ञिया ॥ ९ ॥

स वै न सर्वेणेव संवदेत। देवान् वा ऽएष ऽउपावर्त्तते यो दीक्षते स देवताना मेको भवति न वै देवा' सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते

* तच्छालां'–इति ग।

हि यज्ञियास्तस्माद्वेनः शूद्रेण संवादो विन्देदेतेषा मेवैकं ब्रूयादिम मिति विचक्ष्वेम मिति विचक्ष्वेत्येषु उ तत्र दीक्षितस्योपचारः* ॥ १० ॥

अथारणी पाणौ हृत्वा†। शालां मध्यवस्यति स पूर्व्वार्द्ध्यः स्थूणाराज मभिपद्यैतद्यजुराहेद मगन्म देवयजनं पृथिव्या यत्र देवासो ऽअजुषन्त विश्व ऽइति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचाना यद्वाऽस्य तेऽक्षिभ्या मीक्षन्ते ब्राह्मणाः शुश्रुवांसस्तद्वाऽस्य तैर्जुष्टं भवति ॥ ११ ॥

यद्वाह। यत्र देवासो अजुषन्त विश्व ऽइति तदस्य विश्वैर्देवैर्जुष्टं भवत्यृक्सामाभ्याꣳ सन्तरन्तो यजुर्भिरित्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदेमेति भूमा वै रायस्पोषः श्रीर्वै भूमाशिष मेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै त माहुर्यः श्रिय मश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् [१.१.] ॥

---

* 'चारः'–इति क, 'चार'–इति ग।  † 'कृत्वा'–इति ग।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आधानपुनराधाने अग्निहोत्रं ततः परम् ।
चातुर्मास्यानि च पशुर्द्वितीयकाण्डे ईरितम् ॥ २ ॥

अथ तृतीयचतुर्थाभ्यामेकाहाहीनसत्रलक्षणसकलसोमयाग[1]-प्रकृतिभूतोऽग्निष्टोमोऽभिधीयते[2] । तत्र तृतीयकाण्डस्य प्रथमाध्याये

---

१— "त्रिविधः सोमयागः, एकाहाहीनसत्रनामकः । एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः । द्विरात्रमारभ्य एकादशरात्रपर्यन्ता अहीनाः । त्रयोदशरात्रमारभ्य सहस्रसंवत्सरपर्यन्तानि सत्राणि । द्वादशाहस्तु द्विरूपः । तत्राहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्ररूपेण त्रयोदशरात्रादीनाम् । तस्य च द्वादशाहस्य एकाहरूपो ज्योतिष्टोमः प्रकृतिः"-इति तै० सं० १ २ १ सा० भा० । 'एकाहाहीनसत्राणि सोमभेदा इति त्रयः"-इत्यादि च तै० सं० ७ १ १ भाष्यारम्भे सायणः । 'उक्ताः प्रकृतयोऽहीनैकाहाः ( ९ १ १ )"-इत्यारभ्य "इत्येकाहाः, अथाहीना द्वादशाहस्तयोर्द्वादशरात्रपराः ( १० १ १०, ११ )'-इत्याद्यन्तमाश्वलायनीयश्रौतसूत्रग्रन्थश्चालोच्यः ।

२— "सप्तसंस्थः सोमयागो भवति । तथाहि— "अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति संस्थाः"-इति आश्व० श्रौ० सू० ६ ११ १ । अप्तोर्याम आप्तोर्याम इत्यभिन्नम् ।

३— 'अग्निष्टोमं प्रथममग्र, अतिरात्रमेके पूर्वं समामनन्ति"-इति आप० श्रौ० सू० १० २ ३, ४ । अग्निष्टोमं कृत्स्नाङ्गस्यात्रोपदिष्टत्वात् स एवेतरेषां प्रकृतिः ।

शालानिर्माणप्रभृति दीक्षाहुतिपर्यन्तं प्रतिपाद्यते । तत्रादौ शालानिर्माणार्थं देवयजनपरिग्रहं विधत्ते— "देवयजन जोषयन्त इति । देवा इज्यन्तेऽस्या अत्रेति 'देवयजनम्' । अधिकरणे ल्युट्[1] । प्राचीनवंशसदोहविर्धानादिनिर्माणपर्याप्तं देवयजनं स्थानम्[2] । तत् 'जोषयन्ते' सेवन्ते । स्वार्थिको णिच्[3] । परिग्रहीतुर्यजमानपुरुषाः । तस्य विशेष माह— "स यदेव वर्षिष्ठं स्यात् तज्जोषयेरन्निति । 'सः' इति प्रसिद्धौ, यच्छब्दविशेषणमेतत् । प्रसिद्धं 'यत्' देवयजनम्, 'तत्' 'वर्षिष्ठम्' अतिशयेन वृद्धम्, उच्छ्रितम्, जोषयितव्य मित्यर्थः । वर्षिष्ठ मित्येतत् स्पष्टयति— "यदन्यदित्यादिना । यदस्या[4] उपरि गृहीतायाः 'भूमेः' 'अन्यत्' परिसरस्थल ('नाभिशयीत') नातिशयीत, अतिशयित मुच्छ्रितं न च तद् वर्षिष्ठमित्यर्थः[5] । उक्तलक्षणं देवयजनं प्रशंसति— "अतो वा इति । 'अतः' अस्मात्, यदित्युक्तलक्षणात् 'देवाः' 'दिवम्' 'उपोत्क्रामन्' उत्क्रान्ताः, प्राप्ताः । उत्क्रामन्तु नाम, ततः किमु ? इत्यत आह— "देवान्वा इति । यस्मात् 'एष' दीक्षितोऽपि 'देवान्' उपोत्क्रामति, तस्माद् यादृशेन

---

१— पा० सू० ३. ३ ११२ ।

२— 'देवयजनस्थानम्'-इति च । "देवयजनं वै वरं पृथिव्यै"-इत्यादि ऐ० ब्रा० १. ३. ९ । "प्राचीन माहवनीयात् प्रवणं स्यात् प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्त देवयजनम्"-इति तै० सं० ६. २. ६. २५ ।

३— 'जुष परितर्कणे'-इति चुरादि (१८३५ धा०), 'परितर्कणं महो हिंसा वा'-इति तत्र दीक्षितः। प्रीतिसेवनयोस्तु तुदादित्वात् जुषते इत्येव ।

४— 'यदास्य'-इति च ।

५— 'मुच्छ्रित न स्यात्'-इत्येव च ।

देवयजनेन देवा दिव गता, तादृश कुर्वन् 'स.' दीचित. 'अदेवे' एव 'देवयजने' ('यजते') इष्टवान् भवति। अनेवविधस्य परिग्रहे दोष माह– "स यद्देति। भिन्ने देवयजने 'इष्टा' स्वय मेव 'अवरतर इव' अत्यन्त नीच एव 'स्यात्'। "तस्मादित्युपसहारः। अत्र कात्यायन मौलिक मुलिम्वरण मभिधायाह– "देवयजनं जोषयन्त उन्नतसम"-इति[1] ॥ १ ॥

अन्यानपि धर्मविशेषानाह– "तद्वर्षेति"। 'वर्ष' उन्नत 'सत्', 'तत्' देवयजन 'मम स्यात्', विषमस्य विपद्दुगादर्शनात् तदभावाय तत् सम कर्त्तव्य मित्यर्थ। समत्वेन 'अविभ्रंशि' अपि खलु प्राचीनप्रवणम् उदीचीनप्रवण वा भवेत्, प्राच्यत्वेन देवानाम्, पष्ठत्वेन मनुष्याणां च देवयजनसम्बन्धसम्भवात्, उभयसम्बन्धिन्योर्दिशोरन्यतरस्या प्रवणत्वाभिधान मित्यभिप्राय। उदक्प्रवणत्वे यदर्थसिद्ध दक्षिणोन्नतत्वम्, तदाह– "दक्षिणत प्रत्युच्छ्रित मिवेति। विपक्षबाधमुखेन दक्षिणप्रवणत्व निषेधति– "एषा वा इति। 'क्षिप्रे' अचिरेणैव कालेन 'अमु परलोकम्, 'तथो ह' पूर्वोक्तप्रवणत्वपक्षेऽप्यचिरकालम्'[2] ॥ २ ॥

---

१— 'देवयजन जोषयन्ते। उन्नतसम्। समम्। अविभ्रंशि। अभितो देवयजनमात्रदेशम्। पुरस्तादर्जम्। प्राक्प्रवणम्। उदग्वा। मल्हिप्रागुपागर्तिम। उद्ग्लौमधिमूलेऽपरेऽन्ते विमित कुर्वन्ति"–इति का॰ श्रौ॰ ७. १. १०—१९ इम सूत्राणि द्रष्टव्यानि।

२— "दक्षिणत उन्नत मुदीचीनावनत प्राक्प्रवण प्रागुदक्प्रवण वा देवयजनम्"–इति आप॰ श्रौ॰ सू॰ १० २० १।

अथ देवयजनप्राग्देशे[1] देवयजनान्तरपरिमितप्रदेशस्याधिक्यं निषेधति— "न पुरस्तादिति। स देशातिरेको यजमानभ्रातृव्यातिरेकाय भवति। तथा चापस्तम्बः— "न प्राचीनं देवयजनाद् देवयजनमात्रं मुच्छिपेत्"-इति[2]। दक्षिणोत्तरयोरतिरेकस्त्वैच्छिक[3] इत्याह— 'कामं हैति। पश्चाद्भागे पुनरन्यस्य देवयजनस्य पर्याप्तप्रदेशोपेतं देवयजनं समृद्धिकरमित्याह— "एतद्ध त्वेव समृद्धमिति। प्रतिपाद्य मर्थं निगमयति— "इति देवयजनस्येति। क्लृप्तिरिति शेषः। अत्र कात्यायनः— "समं प्रविभ्रम्यभितो देवयजनमात्रदेशम् पुरस्ताद्वर्जम् प्राक्प्रवण मुदक्प्रवणं वा"-इति[4] ॥ २ ॥

अथाख्यानमुखेन देवयजनप्रशंसान्तरमाह— "तदु होवाचेति। वार्ष्णो[5] ऋषिः 'याज्ञवल्क्यं उवाच'। यदा वयं देवयजनपरिग्रहाय गता, तदानीं 'सात्ययज्ञ' आह। "एतावती वै पृथिवी, यावती

---

१— 'देवयजनप्रदेशे'-इति ख।

२— आप० श्रौ० १०, २०, १०।

३— 'स्वैच्छिक'-इति घ।

४— का० श्रौ० ८, १, १२–१७ षट् सूत्राणि पर्यालोच्यानि।

५— 'वार्ष्णः'-इति सर्वत्र पाठः स्वीकृतोऽत्र मूले भाष्ये च डा०-वेबरेण। तत एवोद्धृतो रोथ-बोथलिङ्क सङ्कलिते 'वार्टेबुख्' कोषेऽपि। परमिहैव पुरस्तादेकत्र (१ १ १ १०), अथापरत्र (१४ ६ १० ८) दृश्यते 'वार्ष्ण'-इत्येव निर्देशः। तथा तैत्तिरीयब्राह्मणेऽपि "गोबलो वार्ष्णः"-इत्येव (३ ११ ९ ३)। अतोऽत्र मत्सङ्गृहीतहस्तलिखितपुस्तकानामेव पाठ आदृत इह मूलभाष्ययोरिति।

वेदिः"—इत्यादिश्रुतेः[1] वेद्युपलक्षितदेवयजनस्य देवतात्मकसमस्तपृथिवीरूपत्वम्, अतो 'यत्र क्व च' मन्त्रेण परिग्रहे सति तद्रूपलक्षणमेव भवेदित्यर्थः ॥ ४ ॥

याज्ञवल्क्यस्तु वक्ष्यमाणलक्षणैर्ऋत्विग्भिः परिग्रह एवोक्तलक्षणदेवयजनपरिग्रह इत्याह—"ऋत्विजो हैवेति। 'शुश्रुवांसः' श्रुतशास्त्राः 'अनूचानाः' साङ्गप्रवचनाध्येतारः[2]। 'साधवः' दोषरहिताः। ऋत्विजोऽपि श्रुताध्ययनादिसम्पन्ना भवेयुरित्येष मर्यादयुक्तो भवति ॥ ५ ॥

यथोक्तदेवयजने यत् कर्तव्यं गृहं तत् प्राचीनवंशं कर्तव्यमित्याह—"तच्छालां वेति। 'शालां' दीर्घचतुरस्रं गृहं, 'विमितं' सर्वतः समपरिमाणम्[3]; अनयोरन्यतरत् 'प्राग्वंशम्' मिनुयात्। प्राग्दिशः प्रशंसार्थमर्थवाद माह—"प्राची हीति। यस्मात् प्रत्यग्दिग्गतान्[4] ऋत्विग्यजमानान् प्रति पुरोदेशाद्गूविर्भाजनाः प्रत्यङ्मुखोपावृत्ताः', 'तस्मात्' 'तेभ्यः' देवेभ्यः 'प्राङ् तिष्ठन् जुहोति'। तस्मात् प्राचीनवंश मुपपद्यते[5] ॥ ६ ॥

प्रासङ्गिक दीक्षितस्य शयने कश्चिन्नियम माह—"तस्माद्

---

१—तै० स० ७. ४. १८. ६ सरक्षणया।

२—'वेदार्थ श्रुतवन्त'—इति (का० श्रौ० ७. १. ८ सू०) या० दे०।

३—"विमितं चतुरस्रं स्यात् दशारत्निप्रमाणतः"—इत्येष परिमितिकारवचनम्। 'दशारत्निमानतः'—इत्यपि तत्र पाठान्तरम्।

४—'प्रागादिग्गतान्'—इति ङ, च।

५—"प्राग्वंशं पुरस्तादुच प्रतिदिग्द्वारं मुदग्वंशं वा"—इति का० श्रौ० सू० ७. १ २०—२३।

चेति । 'अभिप्रसार्य' पादावित्यर्थः । प्राग्दिक्प्रशंसार्थं दिग्विभाग-रूप मर्थवाद माह—"या दक्षिणेति । 'यतो' 'देवा' यजमानादीन् प्रति' 'उपचक्रमुः', 'सा' प्राची 'अहीना' समृद्धा । उदीच्या मनुष्य-सम्बन्धितया तेषा मुदग्वंशा शाला[1] निर्माणात् प्रसिद्ध मित्याह—"तस्मान्मानुष इति । 'मानुषे' मनुष्यार्हे कर्मणि । 'दीक्षितस्य' प्राग्वंश एव, अन्येषां तु उदीचीनवंशत्व मिति व्यवस्था ॥ ७ ॥

सर्वतः परिश्रयणं विधत्ते—"तां वा एता मिति । दृष्ट्यादि-परिहाराय परिश्रयण कर्त्तव्यम्, दीक्षितस्येतरेभ्यो व्यवधानाय च परिश्रयण कर्त्तव्य मिति परिश्रयणस्तुतिः[2] ॥ ८ ॥

तत्रात्रैवर्णिकाना शूद्रादीना मभिप्राप्ति निषेधति—"तस्य सर्वं इवाभिपद्येतेति[3] ॥ ९ ॥

दीक्षितस्य सर्वैर्वाग्व्यवहार निषेधति—"स वै नेति । सर्व-शब्दस्य सङ्कोच माह—"ब्राह्मणेन वैवेति । 'तस्माद्' ब्राह्मणादि-वर्णत्रयस्य यज्ञार्हत्वाद् । 'यदि' 'शूद्रेण' 'संवादो' 'विन्देत्' लभ्येत्, 'एतेषा' त्रैवर्णिकानां मध्ये 'एकम्', 'इमम्' शूद्रम् 'इति' एव मयेदानी मुक्तप्रकारेण 'विचक्ष्व' ब्रूहीति स्वयं 'ब्रूयात्' ।

---

१—"शाला वा"—इति का० श्रौ० सू० ७. १. २४ । दीर्घचतुरस्रा कुटी शालेति हरिस्वामी ।

२—"प्राचीनवंश करोति पुरस्तादुन्नत पश्चान्निनतं सर्वत परिश्रि-तम्"—इति आप० श्रौ० सू० १०. ५. १ ।

३—का० श्रौ० ७ । ५ सूत्र द्रष्टव्यम् ।

वीप्सया[1] सर्वोऽपि वचनप्रकार परिगृह्यते । 'एष' 'उपचार' व्यवहार[2] ॥ १० ॥

समन्त्रकशालाप्रवेशं विधत्ते—"अथारत्नी पाणी कृत्वेति । 'अध्वरस्येति' शाला प्रविश्य मन्त्रेणैतद् देवयजन मिति निश्चिनु-यादित्यर्थ । अध्यवमानप्रकार माह—"स पूर्वार्द्ध मिति । 'स्थूणा-राज' मध्ये स्थित[3] उन्नतस्तम्भ, तस्य 'पूर्वार्द्धम्' 'अभिपद्य' गृहीत्वा "एद मगन्म"-इति[4] 'यजु' ब्रूयात्[5] । अत्र कात्यायन—"समा-रोह्याग्नी शालास्तम्भ पूर्वार्द्धं गृहीत्वारत्निपाणिरादेद मगन्मेति"-इति[6] । मन्त्रस्य द्वितीय पाद देवशब्दतात्पर्याभिधानेन व्याचष्टे—"तदस्य विश्वेरिति । श्रुताध्ययनवद्भिर्ब्राह्मणै । 'अचिभ्या' 'यत्' 'ईचन्ते, 'तत्' 'ते' विश्वैर्देवै 'जुष्टम्' इत्यर्थ ॥ ११ ॥

"यद्वाहेति । तृतीय पाद व्याचष्टे— "ऋक्सामाभ्या मिति ।

---

१— 'वीप्सायां'-इति ङ । वीप्सया—श्रुताविह ' इम मिति विचस्वेति वाक्य द्विरुक्त्या ब्रूयादिति यावत ।

२— का॰ श्रौ॰ ७ ४ ५ सूत्र द्रष्टव्यम् ।

३— 'मध्योदित '-इति घ, ङ ।

४— "एद मगन्म देवयजन पृथिव्या यत्र देवासो अजुषन्त विश्वे । ऋक्सामाभ्या सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ॥"-इति य॰ वा॰ स॰ ४ १ १ मन्त्रपाठ ।

५—'प्राग्वशस्य मध्यम स्थूणाराज मारभ्य जपतीति वाजसनेयकम्"-इति आप॰ श्रौ॰ सू॰ १० ५ ४ ।

६— का॰ श्रौ॰ सू॰ ७ १ ३४ ।

'यजुर्भिः' क्रियमाणं यज्ञस्वरूपम् 'ऋक्सामाभ्यां' स्तोत्रशस्त्राभ्यां 'तरन्तः' पारं प्रापयन्तः इति तत्र भागस्य 'उदृच' परिसमाप्तिं प्राप्नोमीत्युक्तत्वात् भवति। चतुर्थपादस्य प्रथमभागं व्याचष्टे— "रायस्पोषेणेति। 'भूमा' बहुभाव एव 'रायस्पोषो' धनपुष्टिः, स च 'भूमा' साक्षात् 'श्री' एव, तस्मात् 'एतद्' यागपाठे 'आशिषम्' एव आशास्ते। तद्द्वितीयभागस्य तात्पर्यमाह— "स मियेति। लोके यः श्रियं परमतां च गच्छति, तम् 'इयम्' अन्नं 'मदति' मोदत इत्याहुः; अतो मन्त्रे स मियेति भाग माहे-त्यर्थः ॥ १२ ॥ १ [ १. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् )

अपराह्णे दीक्षेत। पुरा केशश्मश्रोर्वपनाद्यत् काम-येत तदश्नीयाद्यद्वा सम्पद्येत व्रतꣳ ह्येवास्यातोऽशनं भवति यदि नाशिशिषेदपि कामं नाश्नीयात् ॥ १* ॥

---

* एतदनन्तरं मिश्र 'शतं (१३००)'– इति ग-पुस्तके ।

अथोत्तरेण शालां परिश्रयन्ति। तदुदकुम्भ मुपनिदधाति तन्नापित उपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्ततेऽमेध्यो वै पुरुषस्यामेध्यं यदास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वा अस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षा इति ॥ २ ॥

तद्वैके। सर्व्वं एव वपन्ते सर्वं एव मेध्या भूत्वा दीक्षिष्यामह इति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत ॥ ३ ॥

स वै नखान्येवाग्रे निकृन्तते। दक्षिणस्यैवाग्रे सव्यस्य वा अग्रे मानुषेऽथैवं देवत्राङ्गुष्ठयोरेवाग्रे कनिष्ठिकयोर्व्वा अग्रे मानुषेऽथैवं देवत्रा* ॥ ४ ॥

स दक्षिण मेवाग्रे गोदानं वितारयति। सव्यं वा अग्रे मानुषेऽथैवं देवत्रा ॥ ५† ॥

स दक्षिण मेवाग्रे गोदान मभ्युनत्ति। इमा आपः शु मु मे सन्तु देवीरिति स यदाहेमा आपः शु मु मे

---

*, † 'देवत्रा'–इति ग।

सन्तु देवीरिति वज्रो वा ऽआपो वज्रो हि वा ऽआपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्तदेतमेवैतद्वज्रꣳ शमयति तथो हैनमेष वज्रः शान्तो न हिनस्ति तस्मादाहेमा आपः शमु मे सन्तु देवीरिति* ॥ ६ ॥

अथ दर्भतरुणकमन्तर्दधाति। ओषधे त्रायस्वेति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाभिनिदधाति स्वधिते मैनꣳ हिꣳसीरिति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥ ७ ॥

प्रच्छिद्योदपात्रे प्रास्यति। तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥ ८ ॥

अथ नापिताय क्षुरं प्रयच्छति। स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥ ९ ॥

अथ स्नाति। अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा ऽआपो मेध्यो भूत्वा दीक्षा ऽइति पवित्रं वा ऽआपः पवित्रपूतो दीक्षा ऽइति तस्माद्वै स्नाति ॥ १० ॥

---

* 'रिति'-इति क, 'रिति'-इति ग।

स स्नाति। आपो अस्मान्मातरः शुन्धयन्त्वित्येत-
द्वाह शुन्धयन्त्विति घृतेन नो घृतप्वः पुनन्त्विति तद्वै
सुपूतं यं घृतेन पुनंस्तस्मादाह* घृतेन नो घृतप्वः पुन-
न्त्विति विश्वᳪ हि रिप्रं प्रवहन्ति देवीरिति यद्वै विश्वᳪ
सर्व्वं तद्यदमेध्यᳪ रिप्रं तत्सर्व्वᳪ ह्यस्मादमेध्यं प्रवहन्ति
तस्मादाह विश्वᳪ हि रिप्रं प्रवहन्ति देवीरिति† ॥ ११ ॥

अथ प्राङिवोदङ्ङुत्क्रामति। उदिदाभ्यः शुचिरा पूत
ऽएमीत्युद्धाभ्यः शुचिः पूत एति‡ ॥ १२ ॥

अथ वासः परिधत्ते। सर्व्वत्वायैव स्वा मेवास्मिन्नेतत्त्वचं
दधाति या ह वा ऽइयं गोस्त्वक् पुरुषे हैषाग्र ऽआस॥१३॥

ते देवा अब्रुवन्। गौर्व्वा ऽइदᳪ सर्व्वं बिभर्त्ति
हन्त येयं पुरुषे त्वग् गव्येतां दधाम तयैषा व्वर्षन्तं तया
हिमं तया घृणिं तितिक्षिष्यत ऽइति ॥ १४ ॥

तेऽवच्छाय पुरुषम्। गव्येतां त्वच मदधुस्तयैषा व्वर्षन्तं
तया हिमं तया घृणिं तितिक्षते§ ॥ १५ ॥

अवच्छितो हि वै पुरुषः। तस्मादस्य यत्रैव क्व च

---

* 'घृतेनापुनस्तस्मादाह'–इति ग।

† 'रिति'–इति ख, 'रिति'–इति ग।

‡ 'एति'–इति ख, 'एति'–इति ग।

§ 'तितिक्षते'–इति पाठो दृष्ट A-नामपुस्तके डा०-वेबरेण।

शब्दवाच्या । अत एव पृथिवीनामसु यास्केन परिपठितम्[1]— "अदितिः, इळा, निर्ऋतिरिति"[2]। अत एव तैत्तिरीयके— "इयं वा अदितिः"-इति[3]। यत्तूपरिष्टात् 'अदिति'-शब्दस्य निर्वचनमाम्नास्यते— "स यद्यदेवासृजत तत्तदत्तुमध्रियत, सर्वं वा अत्तीति तददितेरदितित्वम्"-इति[4], तत् सृष्ट्यादिकारणत्वेन ब्रह्मविषयम्। स्वात्मनि जातमोषधिवनस्पत्यादिकं पार्थिवं सर्वमत्तीत्यदितिरिति योजनीयम्। एवमदितियागे सति देवानां यज्ञमाभिर्जातेत्याह— "ततो यज्ञमपश्यन्नतन्वतेति। 'ततः' तस्मात्, अदितेर्हविर्भागकल्पनात्। स्पष्टमन्यत् ॥ ६ ॥

आख्यायिकया प्रायणीयस्य यज्ञदर्शनहेतुत्वमुपपाद्य प्रकृते योजयति— "स यदिति । यदेतत् प्रायणीययागस्यानुष्ठानम्, तद् व्यामोहविषयतामापन्नस्य कृत्स्नस्य 'यज्ञस्यैव' दर्शनाय सम्पद्यते । तद्दर्शनमपि किमर्थमित्यत आह— "यज्ञं दृष्ट्वेति। सोमसाध्यं 'यज्ञं' प्रथमं 'दृष्ट्वा', पश्चात् तत्साधनं सोमं 'क्रीणाति' सोमविक्रयिणः सकाशात्,— "तं वै ते क्रीणानीत्यादिवक्ष्यमाणप्रकारेण" स्वीकरवाणि। तेन च क्रीतेन सोमेन 'तं' सोमसाध्यं यज्ञं 'तनवै' विस्तारयाणि। 'इति'-शब्दो वाक्यसमाप्तौ। एवं यज्ञदर्शनस्य प्रयोजनवत्ता प्रतिपाद्य

---

१— वस्तुतो न तु यास्केन, अपि तु निघण्टुसमाम्नायकृतेति बोध्यम् ।

२— निघ० १ । १४, १५, १६ ।

३— ऐ० ब्रा० २ ३ ७ ।

४— १० का० ६ अ० ५ ब्रा० ५ क० (= बृ० आ० उ० १ २ ५) ।

५— अस्मिन्नेव काण्डे ३अ० ३ ब्रा० १क० द्रष्टव्यम् ।

तद्धेतुभूत प्रायणीययाग निगमयति— 'तस्मादादित्य मिति । एव प्रायणीयेष्टौ चरुसाध्य मादित्ययाग विधायान्यांश्चतुरो यागान् विधित्सुस्तेषां काल माह— "तद्धा इत्यादि । "निरुप्त मिति, हवि-संस्कारोपलक्षणम् । आदित्यस्य हविषो निर्वापप्रोक्षणाद्यासादनान्ता संस्कारा कृता भवेयु । प्रधानदेवता च 'अनिष्टा' अकृत-यागा भवति, तस्मिन् काले वक्ष्यमाणाश्चतस्रो देवता यष्टव्या इत्यर्थः[1] ॥ ७ ॥

अथ तान् यागान् पूर्ववदाख्यायिकया विधित्सुस्तत्र प्रथम यागस्य विधि मर्थवादेनोन्नयति— "अथैभ्य इति। अथेत्याज्यभागा-नन्तर्य्ये। ननु प्रायणीयाया माज्यभागौ न स्त , अत एवाश्वलायनो-ऽप्यसूचयत्— "प्रयन्त्येव मनाज्यभागेति[2] । अस्य चानाज्यभागपक्षस्य लिङ्ग मापस्तम्बेनापि दर्शितम्— "स्विष्टकृत पञ्च मिति[3]। यदि ह्या-ज्यभागौ स्यातां, तदा पथ्यास्वस्त्यादय पञ्चेति स्विष्टकृदष्टम स्यात्। नैष दोष , वाजसनेयिशाखान्तराभिप्रायेणाज्यभागसद्भावात् । अत एव कात्यायनेन सूचितम्— "आज्यभागाविष्ट्वाज्येन देवताश्चतस्रो यजति, पथ्यां स्वस्ति मग्निं सोम सवितारञ्च'-इति[4] । "पथ्या स्वस्तिरिति । 'एभ्य'— इति "इष्यर्थानां मीयमाण"-इति[5] चतुर्थी ।

---

१— ऐ॰ ब्रा॰ १ २.१ द्रष्टव्यम ।
२— आश्व॰ श्रौ॰ सू॰ ४ ३ ४, ६ ।
३— आप॰ श्रौ॰ सू॰ १॰ २१ १२ ।
४— का॰ श्रौ॰ सू॰ ७ ५ १५ ।
५— पा॰ सू॰ १ ४ ३६ ।

ऋतुपरिज्ञानहेतुत्वादपि तां पथ्यस्वस्तिं प्रशंसति— "ऋतवो मुग्धा इति। हेमन्तशिशिरावेकीकृत्य ऋतूनां पञ्चत्वम्। तथा चैतरेयक ब्राह्मणे आम्नातम्— "हेमन्तशिशिरयोः समासेनेति"[1]। ऋतुपरिज्ञानाभावे हि वसन्तादिकालसाध्यो यज्ञो विकलः स्यात्, अतस्तत्परिहारायैतद्यागपञ्चकानुष्ठानमिति स्तुतिः ॥ १३ ॥

दिङ्मोहनिवृत्तिहेतुत्वेनापि पथ्यस्वस्तिं प्रशंसति— "दिशो मुग्धा इति। यज्ञानुष्ठानाय वसन्तादिकाला एव तदुपयुक्ताः। प्राच्याद्याः 'पञ्च दिशः' 'मुग्धा आसन्' व्यामूढा अभवन्। गतमन्यत् ॥ १४ ॥

तत्र कीदृश्या देवतया कतमा दिक् प्रज्ञातेत्याशङ्क्य प्रथमदेवताज्ञातां दिशं प्रदर्श्योपपादयति— 'उदीचीं तेनेति'। यस्मादेव पथ्या स्वस्त्याख्यया प्रथमदेवतया उदीची दिक् देवैः प्रज्ञाता, 'तस्मात्' 'अत्र' अस्मिन् लोके कुरुपञ्चालाख्येषु जनपदेषु 'उत्तरा' उच्चतरा 'वाग्' 'वदति' भृशं शब्दायते अत्युन्नतभाषणस्य तत्रोपलम्भात्। "देवमनुष्येत्यादौ"[2] परिगणनाभावेऽपि बहुलग्रहणात् कुरुपञ्चालशब्दादपि त्रा प्रत्ययः। ननु वाच उत्तरदिक्सम्बन्धोऽस्तु, कुतः पथ्या-स्वस्त्या दिशः सम्बन्धः? इति तत्राह— 'वाग्घीति'। 'एषा' पथ्या स्वस्तिः, यस्मात् 'निदानेन' कारणेन निरूप्यमाणा सती 'वाक्' एव, "वाग्वै पथ्या स्वस्तिः -इति श्रुतम्[3], अत उत्तरस्यां

१— ऐ० ब्रा० १ १ १ ।   २— पा० सू० ५ ४ ५६ ।

३— "वाग्वै पथ्या स्वस्तिस्तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यत उदञ्च उ एव यन्ति वाचं शिक्षितुं यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति ह स्माहैषा वाचो दिक् प्रज्ञाता'—इति कौ० ब्रा० ७ ६ ।

दिशि वाचः प्रसिद्धिर्युक्तेति भावः। 'चि' यस्मादेवम् 'एतया' 'उदीचीं दिशं' देवाः 'प्राजानन्', तस्मात्। 'एतस्यै' षष्ठ्यर्थे चतुर्थी[1], एतस्याः पथ्यायाः स्वस्तेः 'उदीची दिक्' स्वभूता ॥ १५ ॥

अथ द्वितीयदेवतया प्रज्ञातां दिशं सुपन्यस्योपपादयति— "प्राची मेवेति। यस्मादग्निः प्राच्या दिशो ज्ञानहेतुः, तस्मात् 'पश्चाद्' अवस्थितम् 'अग्निम्' आहवनीयरूपेण 'प्राञ्च मुद्धृत्योपासते' अग्निहोत्रहोमादिरूप सुपासनं कुर्वन्ति। यस्मात् देवाः 'प्राचीं दिशम्' 'एतेन' अग्निना 'प्राजानन्', तस्मात् 'एतस्य' अग्नेः 'प्राची दिक्' स्वभूतेत्यर्थः। अत एवान्यत्राम्नायते— "प्राची दिगग्निर्देव-तेति[2] ॥ १६ ॥

अथ तृतीयदेवतया प्रज्ञातां दिशं सुपन्यस्योपपादयति— "दक्षिणा मेवेति। यस्मात् दक्षिणा दिक् 'सोमेन' परिज्ञाता, 'तस्मात्' उपरवदेशे 'क्रीतं सोमं' महावेदेर्दक्षिणतोऽनसा 'परि-वहन्ति'। "दक्षिणादाच्"-इत्याच्[3] प्रत्ययः। 'तस्मात्' दक्षिणदिक्-प्रवर्त्तनाद्धेतोः वल्लीरूपः 'सोमः' 'पितृदेवत्यः'। पितृदेवताकदक्षिण-दिक्प्राप्तेः सोमस्य पितृदेवत्यत्वं युक्तम् ॥ १७ ॥

अथ चतुर्थदेवतया प्रज्ञातां दिशं सुपन्यस्यति— "प्रतीची मेवेति। 'एषः' सूर्यः 'प्रत्यङ्ङेति' प्रत्यङ्मुखो गच्छति। स्पष्ट मन्यत् ॥ १८ ॥

---

१— पा० २. ३. ३२ सू० वा० १।
२— कौ० ब्रा० ७. ६।
३— पा० सू० ५. ३. ३६।

ते च देवाः 'ताम्' 'पथ्यां स्वस्तिम्' 'अजनयन्' । मन्त्ररूपा 'वाक्' एव 'पथ्या स्वस्तिः'– इत्युच्यते । पथोऽनपेता 'पथ्या'। "धर्मपथ्यर्थन्यायादनपेते"-इति[1] यत् । 'स्वस्तिः' शोभनरूपेति। 'पथ्या-स्वस्ति'-शब्दनिर्वचनस्य वाचि सम्भवात्[2] । सा च वाक् यज्ञात्मिका । अतस्तस्या दर्शनेन 'यज्ञम्' एव 'अपश्यन्' । एवं पुरावृत्तप्रतिपादनेन पथ्या स्वस्तिः प्रथमं यष्टव्येति प्रतिपादितं भवति ॥ ८ ॥

अथाग्नेयस्य द्वितीययागस्य विधिं सूचयति– "अथैभ्योऽग्निरिति । 'आग्नेयम्'-इति सामान्योक्तस्य विवरणं "यदेव शुष्क मिति । यत् खलु यज्ञसम्बन्धि 'शुष्कं' नीरसं समिदादि द्रव्यम्, 'तत् आग्नेयम्' । अन्यत् समानं पूर्वेण ॥ ९ ॥

अथ सौम्यस्य तृतीययागस्य विधिं सूचयति– "अथैभ्यः सोम इति । "स यदिति । सर्वत्र तच्छब्दः प्रसिद्धिद्योतकः । 'सौम्यं' सोमदेवत्यम् । "सोमाट्ट्यण्"[3] । 'यत्' खलु यज्ञसम्बन्धि 'आर्द्रं' रसयुक्तं सोमादि द्रव्यम्, 'तत् सौम्यम्' । शुष्कार्द्रयोरग्नीषोमाभिमानिदेवते । एतच्च ब्राह्मणान्तरात्– "द्वयं वा इदं न तृतीयमस्त्यार्द्रं चैव शुष्कञ्च"-इत्यादिना[4] ॥ १० ॥

---

१— पा॰ सू॰ ४. ४. ९२ ।

२— "पथ्या स्वस्तिः, पन्था अन्तरिक्षं तन्निवासात्"–इति, "स्वस्तीत्यविनाशिनामास्तिरभिपूजितः सु अस्तीति"–इति च यास्कीयं निर्वचनम् (११. ४ ११, ३. ४. ४.)।

३— पा॰ सू॰ ४. २ ३० ।

४— १का॰ ५प्र॰ २ब्रा॰ २३का॰ (१ भा॰ ४१८पृ॰)।

अथ सावित्रस्य चतुर्थयागस्य विधिमुपन्यस्यति— "अथैभ्य सवितेति । सवितुः प्रेरकत्वात्, पशूनां च तत्प्रेर्यत्वात् प्रेर्यप्रेरकयोरभेदं विवक्षित्वा 'सविता पशव'-इति तादात्म्यव्यपदेशः । सवितुश्च पशुप्रेरकत्वं "देवो वः सविता प्रार्पयतु" इति[1]-मन्त्रवर्णादवगम्यते । ते च पशवो हृदयाद्यवदानद्वारेण पयःप्रभृतिद्रव्योपादानत्वेन च यज्ञात्मकाः । यस्मादेव चतसृभिर्देवताभिर्देवाः कृत्स्नं यज्ञमपश्यन्, दृष्ट्वा चाकुर्वन्, तस्मादिमाश्चतस्रो देवताश्चिकीर्षितयज्ञस्य प्रथमत आज्येन यष्टव्या इति समुदायार्थः । एवमाज्यहविष्कांश्चतुरः प्रधानयागान् कृत्वा प्रथममिश्रत्वेन हविषा अदितिर्यष्टव्येत्याह— "अथ यस्यै देवताया इति । यस्मादेव देवाः पञ्चमीमदितिमयजन्, तस्मादिदानीन्तनोऽपि यजमानो यागसमये अदितियागं पञ्चमं कुर्यादित्यर्थः ॥ ११ ॥

पञ्चसङ्ख्या मनूद्य प्रशंसति— "ता वा इति । 'एता' पञ्चसङ्ख्याया । 'मुग्ध आसीत्' मोहविषयो भवेदित्यर्थः । अस्तेर्हि लिङि "अस्तिसिचोऽपृक्ते"-इतीट्[2] । "पाङ्क्तो वा इति । पञ्चपदा पङ्क्तिः, तद्वाचिना पङ्क्तिशब्देन पञ्चसङ्ख्या लक्ष्यते, तद्योगाद् 'यज्ञः पाङ्क्तः' । तद्योगश्च तैत्तिरीयके स्पष्टमाम्नात— "धानाः करम्भः परिवापः पुरोडाशः पयस्या, तेन पङ्क्तिराप्यते, तद् यज्ञस्य पाङ्क्तत्वम्"-इति[3] । ऐतरेयके तु तत् पाङ्क्तत्वं "यो वै यज्ञं हविष्पङ्क्तिं वेद"-इत्यादिना बहुश आम्नातम्[4] ॥ १२ ॥

---

१— वा० सं० १ १ ४ ।  २— पा० सू० ७ ३ ९६ ।
३— तै० सं० ६ ४ ११ ४, ५ ।  ४— ऐ० ब्रा० २ ३ ४ द्रष्टव्यम् ।

अथ पञ्चमदेवतया प्रज्ञातां दिश मुपन्यस्यति— "ऊर्द्ध्वा मेवेति । यस्माद् भूम्या मुत्पन्नाः ओषधिवनस्पतय ऊर्द्ध्वमुखा एव वर्द्धन्ते, तस्मात् अदित्यभिधानाया भूम्याः सकाशादूर्द्ध्वदिक्परिज्ञानं युक्त मित्यर्थः । इत्थं पञ्चदिग्व्यामोहपरिहारोपन्यासमुखेन प्राय-णीयेष्टौ पञ्चदेवता यष्टव्या इत्युक्तम् ॥ १८ ॥

अथातिथ्यायाः प्राक् प्रायणीयो कर्त्तव्य इत्यभिधातुं प्रायणी-योदयनीययोर्याज्ञदयरूपता मातिथ्यायाः शिरोरूपताञ्चाह— "शिरो वै यज्ञस्येति । आतिथ्यमध्येऽनुष्ठेयत्वेन प्राधान्याच्छिरस्त्व-व्यवहारः । 'एते हविषी' एतौ यागावित्यर्थः; यागस्य हविः-प्रधान-त्वात् । लोके शिरस उभयतो बाह्वोर्दर्शनात्, आतिथ्यस्य शिर-स्त्वाभिधानाद्, बाहुस्थानीययोरनुष्ठानं युक्तम्[1] ॥ १९ ॥

उक्तं याज्ञत्व मुपजीव्य प्रायणीयोदयनीययोरेकरूपता माह— "तदाहुरिति । सङ्क्षेपोक्तं यच्छब्दार्थं विशदयति— "यदेवेति । मध्ये कर्मान्तरव्यवधानात् कथं तस्य बर्हिषोऽवस्थान मित्याशङ्क्य तदुपायं दर्शयति— "तदपोह्येति । प्रस्तरं सकृत्वा बर्हिरङ्ग्रुयोपरि प्रज्ञातं निदध्यात् । बर्हिर्वत् स्थालीमेतयोरप्युदयनीयार्थ मवस्थान माह— "तां स्थाली मिति । या प्रायणीयचरुस्थाली, 'तां' 'प्रक्षाम-कर्णाम्' ; अग्निसंयोगेनान्तरीषद्दग्धस्य 'क्षामः' , तस्य 'कर्णौ' ओष्ठः, तत्सहिता मित्यर्थः । "क्षायो मः"-इति[2] निष्ठातकारस्य

---

१— यज्ञस्य पुरुषकल्पितत्वं वक्ष्यतीत्येवानुपदम् ( ब्रा० ५ अ० ३. ) ।

२— पा० सू० ८. २. ५३ ।

गतम्। 'मेक्षण' चरुनिष्पादनसाधनं काष्ठम्[1]। तत् 'प्रस्तर' चरुणा लेपयित्वा स्थाल्या सह निदध्यादित्यर्थः। अलिङ्गेक्षं च विधत्ते— "य एव प्रायणीयस्येति। इदानीन्तनाना मपि याज्ञोः सद्रूपत्वं प्रायणीयोदयनीययोरैकरूप्यनिबन्धन मित्याह— "तद्दे- वदिति। सादृश्य मेकदेशेनापि भवतीति तद् विशेष्यते— "सरू- पाविति॥ ११॥

उक्तो बर्हिराद्यैकरूप्यपक्षो न नियत इत्याह— "तद् तथेति। "एवं मेक्षण मिति। बर्हिर्वेद्यां प्रहरेदित्यर्थः। 'स्थालीं' 'निर्णिज्य' क्षामकर्ष मपि प्रगमय्य स्थलिशा मेव च नियम मङ्गीकृत्य। तेषा मपि केनचिन्निमित्तेन विगमे सति तदेकत्व मपि नियमेन भवि- तव्य मित्याह— "य एव प्रायणीयस्येति। 'विभेतः स्युः' विविधदेशं प्राप्ता भवेयुः। तदैकरूप्यत्वं किन्निबन्धन मित्याह— "स यदिति। 'यद्दै' यदेव बर्हिर्यागस्य स्वरूपम्, अतस्तयोरैकरूप्य मेव नियमेन भवितव्य मित्यर्थः। 'तेनैव'-इति एवकारेण पूर्वोक्तं बर्हिरा- द्यैकरूप्य व्यावर्त्तते। तेनैव द्रव्यदेवतैक्येन कारणेनेदानी मपि

---

१— "असौ मेक्षण मध्यादधाति इतोऽहैव गतं पुरस्तात् (२ ४. २. १६)। सामिधेनीकाष्ठानि पञ्चदश, द्वे आघारसमिधौ अनूयाजसमिदेकेति नव परिधय, उपवेषो मेक्षण इष्टिरिति तिस्र समिध इत्येकविंशति। तत्र प्रादेशमात्रं हविस्त्वदानसाधनं चरोरुपधानसाधनं च काष्ठखण्डं मेक्षण मुच्यते। तदेतत् सर्वं व्याख्यात तै० ब्रा० (१. ३ १०. ४, ३. ७. ४. ६.) सा० भा०। "इध्मजातीय मिध्मार्द्धप्रमाणं मेक्षणं भवेत्। वृत्तं चाङ्गुष्ठपृथ्वग्र मवदानक्रियाक्षमम्"–इति कर्म–प्र० २. ५ १४। "मेक्षणेन जुहोति"–इत्यस्य (का० श्रौ० ४ १ ७) सूत्रस्य व्याख्याने 'मेक्षणं च होमसाधनत्वाद् वैकङ्कत पालाश मपि भवतीति च याज्ञिकदेव।

मनुष्याणां 'बाहू सहूपौ' भवत इत्यर्थः । तथाच कात्यायनोऽपि— "वसनेषणवर्हिर्भिद्धात्युद्यनीयायैं, सलेप चरुं प्रमृष्टं मेक्षणं, प्रक्षालयति वा चरुम्, अनुप्रहरतीतरे, न एवलिङ्गौ, विमेतेष्व- न्येऽपि"-इति[1] । 'इतरे' बर्हिर्मेक्षणे ॥ २१ ॥

देवतैक्याभिधानप्रसङ्गेन पत्नसङ्गां प्रशंसति— "स वा इति । 'सः' अध्वर्युः । 'तस्मात्' देवतानां पत्नलाद्धेतोः 'इत्या' इत्थम्, अनेन इदानीं परिदृश्यमानेन प्रकारेण 'पश्चाङ्गुलयः' लभ्यन्ते । हस्तद्वय मभिनीय प्रदर्शयितु द्विरभिधानम् । प्रकृतिभूतदर्शपूर्ण- मासेष्टिवत् साकल्येनानुष्ठानप्रसक्तौ तत् प्रतिषेधति— "तत्त्वक्ष्यन्तं भवतीति । अन्तग्रहणेन सिद्धौ उपरितनाङ्गनिषेधो नित्यानुवाद- तया पुनर्निषिध्यते— 'न पत्नीः सयाजयन्तीति । प्रायणीयोदय- नीययोर्वाङ्गत्वनिरूपणादप्युत्तराङ्गजातं न कर्त्तव्य मित्याह— "पूर्वार्द्धं वा अन्यात्मनो बाहू इति । 'आत्मनः' शरीरस्य 'पूर्वार्द्धं मनु' 'बाहू' वर्त्तेते, न सर्वाङ्गे, अतः 'एतत्' एतेन तदुभयत्र शय्यन्तानुष्ठानेन, यज्ञस्य 'पूर्वार्द्धं मेव' संस्कृतवान् भवति[2] ॥ २२ ॥ १ [२. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये ·

तृतीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

---

१— का॰ श्रौ॰ सू॰ ७ ५ १९–२१ ।

२— "शय्यन्तं भवति"–इति च का॰ श्रौ॰ सू॰ ७. ५ २२ । एतदुपरञ्च सिद्ध बहुविचाराः सन्ता दृश्यन्ते ।

( अथ चतुर्थं ब्राह्मणम् )

दिवि वै सोम आसीत्। अथेह देवास्ते देवा अकामयन्ता नः सोमो गच्छेत् तेनागतेन यजेमहीति त एते माये अस्तजन्त सुपर्णीं च कद्रूं च तद्धिरण्यानां ब्राह्मणे व्याख्यायते सौपर्णीकाद्रवं यथा तद्दास ॥ १ ॥

तेभ्यो गायत्री सोम मच्छापतत्। तस्या आहरन्त्यै गन्धर्वो विश्वावसुः पर्यमुष्णात्ते देवा अविदुः प्रच्युतो वै परस्तात् सोमोऽथ नो नागच्छति गन्धर्वा वै पर्य्य-मोषिषुरिति ॥ २ ॥

ते होचुः। योषित्कामा वै गन्धर्वा वाच मेवैभ्यः प्रहिणवाम सा नः सह सोमेनागमिष्यतीति तेभ्यो वाचं प्राहिण्वन्त्सैनान्त्सह सोमेनागच्छत् ॥ ३ ॥

ते गन्धर्वा* अन्वागत्याब्रुवन्। सोमो युष्माकं वा-गेवास्माक मिति तथेति देवा अब्रुवन्निहो वेदागान्सैना मभीषुहेव नैष्ट विह्वयामहा इति तां व्यह्वयन्त ॥ ४ ॥

तस्यै गन्धर्वाः। वेदानेव प्रोचिर इति वै वयं विद्मेति वयं विद्मेति† ॥ ५ ॥

---

* 'गन्धर्वाः'-इति ग, घ।

† 'विद्मेति -इति ख, 'विद्मेति'-इति ग घ।

अथ देवाः*। व्रीणा मेव सृष्ट्वा व्वादयन्तो निगायन्तो निषेदुरिति वै ते व्वयं गास्यामो† इति त्वा प्रमोदयिष्यामह ऽइति सा देवानुपावर्त्त सा वै सा तन्मोघमुपावर्त्त या स्तुवद्भ्यः शंऽसद्भ्यो नृत्तं गीत मुपावर्त्त तस्मादप्येतर्हि मोघसंऽहिता एव योषा एवंऽ हि व्वागुपावर्त्तत ता मु ह्यन्या ऽअनु योषास्तस्माद् य एव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा इव ॥ ६ ॥

तद्वा ऽएतदुभयं देवेष्वासीत्। सोमश्च व्वाक् च स यत् सोमं क्रीणात्यागत्या ऽएवागतेन यजा ऽइत्यनागतेन ह वै स सोमेन यजते यो ऽक्रीतेन यजते ॥ ७ ॥

अथ यद् ध्रुवाया माज्यं परिशिष्टं भवति। तज्जुह्वां चतुष्कृत्वो व्विगृह्णाति बहिर्या हिरण्यं प्रबध्यावधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यञ्चोभयंऽ ह्यग्निरेतसम्‡ ॥ ८ ॥

स हिरण्य मुपदधाति। एषा ते शुक्र तनूरेतद्वर्च इति व्वर्चो वा ऽएतद्धिरण्यं तया सम्भव भ्राजं गच्छेति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह ॥ ९ ॥

---

* 'देवा'–इति ग, घ। † 'गमिष्याम'–इति क।
‡ 'ह्यग्निरेतस'–इति ख ह्यग्निरेतसम्ऽ'–इति ग, घ।

तां यथैवादो देवाः[*]। प्राहिण्वन्त्सोम मच्छैव मेवैना मेष एतत् प्रहिणोति सोम मच्छ व्वाग् वै सोमक्रयणी निदानेन ता मेतयाहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥ १० ॥

स जुहोति। जूरसीत्येतद्ध वा अस्या एकं नाम यज्जू-रसीति धृता मनसेति मनसा वा ऽइयं व्वाग् धृता मनो वा ऽइदं पुरस्ताद्वाचः इत्थं व्वद मैतद्वादीरित्यलगल मिवा[†] ह वै व्वागवदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११[‡] ॥

जुष्टा व्विष्णव ऽइति। जुष्टा सोमायेत्येवैतदाह य मच्छेम इति तस्यास्ते सत्यसवसः प्रसव ऽइति सत्यप्रसवा न एधि सोमन्नोऽच्छेहीत्येवैतदाह तन्वो यन्त्र मशीय स्वाहेति स ह वै तन्वो यन्त्र मश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्येवैतदाह[§] ॥ १२ ॥

अथ हिरण्य मपोद्धरति। तन्मनुष्येषु हिरण्यं करोति

---

* 'देवा'–इति ग, घ।

† '०लग्न मिव'–इति सा०–सम्मत इति डा० वेबर।

‡ एतदनन्तरम् "अर्द्धप्रपा० ६७"–इति क ख पुस्तकयो।

§ 'दाह'–इति ख।

स यत् सहिरण्यं जुहुयात् पराग् हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृज्यात्तन्न मनुष्येषु हिरण्य मभिगम्येत्[*] ॥१३॥

सोऽपोद्धरति। शुक्र मसि चन्द्र मस्यमृत मसि वैश्वदेव मसीति तत्तेन पयसा हुत्वा यद्देवैतत्तदाह शुक्र मसीति शुक्रꣳ ह्येतच्चन्द्रमसीति चन्द्रꣳ ह्येतदमृत मसीत्य-मृतꣳ ह्येतद्वैश्वदेव मसीति वैश्वदेवꣳ ह्येतत् प्रमुच्य तृणं बर्हिष्युपसृजति सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥

अथापरं चतुर्गृहीत माज्यं गृहीत्वा। अन्वारभस्व[†] यजमानेत्याहापोर्सवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहिता सैवैना मेतत्सती प्राहैषीदाग् वै सोमक्रयणी निदानेन ता मेतयाहुत्या-प्रैषीत् प्रीतया सोमं क्रीणानीति[‡] ॥ १५ ॥

अथोपनिष्क्रम्याभिमन्त्रयते। चिदसि मनासीति चित्तं वा ऽइदं मनो व्वागनुवदति धीरसि दक्षिणेति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यु[§]नूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति

---

* 'मभिगच्छतु'-इति ख 'मभिगम्येत -इति ग, 'मभिगम्येत' इति घ।

† 'गृहीत्वा। न्वारभस्व'-इति ख।

‡ 'क्रीणानीति'-इति ख, 'क्रीणानीति'-इति ग, घ।

§ 'जिज्यूषन्त्यु-इति सा० सम्मतो गम्यते।

दक्षिणा च्छेपा छचियासि यच्चियासीति छचिया च्छेपा यच्चिया च्छेपादितिरस्युभयतःशीर्ष्णीति स यदेनया समानः सन्विपर्य्यासं व्वदति यदुपरं तत् पूर्व्वं करोति यत् पूर्व्वं तदुपरं तेनोभयतःशीर्ष्णी तस्मादाहादितिरस्युभयतःशीर्ष्णीति ॥ १६ ॥

सा नः सुप्राची सुप्रतीच्येधीति। सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥ १७ ॥

मित्रस्त्वा पदि बध्नीता मिति। व्वरुण्या वा एषा यद्रज्जुः सा यद्रज्ज्वाभिहिता स्याद्वरुण्या स्याद्यद्वनभिहिता स्याद्यतेव स्यादेतद्वा ऽअवरुण्यं यन्मैत्रः सा यथा रज्ज्वाभिहिता यतैव भवत्येतद्भवति यदाह मित्रस्त्वा पदि बध्नीता मिति ॥ १८ ॥

पूषाध्वनस्पात्विति। इयं वै पृथिवी पूषा यस्य वा ऽइय मध्वन् गोप्त्री भवति तस्य न का चन ह्वला भवति तस्मादाह पूषाध्वनस्पात्विति* ॥ १९ ॥

इन्द्रायाध्यक्षायेति। स्वध्यक्षासदित्येवैतदाह यदाहेन्द्रायाध्यक्षायेत्यनु त्वा माता मन्यता मनु पितानु

---

* 'त्विति'–इति ख, 'त्विति'–इति ग, घ।

म्राता सुगर्भ्योऽनु सुखा सयूथ्य इति सा युत्ते जुन्म तेन नोऽनुमता सोम मच्छेहीत्येवैतदाह सा देवि देव मच्छे-हीति देवी ह्येषा देवु मच्छति यद्वाक् सोमं तस्मादाह सा देवि देव मच्छेहीतीन्द्राय सोम मितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोम मिति रुद्रस्त्वावर्त्तयत्विदु प्रशाशयैतदाह रुद्रः हि नाति पशवः स्वस्ति सोम-सखा पुनरेहीति स्वस्ति नः सोमेन सह पुनरेहीत्येवै-तदाह ॥ २० ॥

तां यथैवादो देवाः*। प्राहिण्वन्त्सोम मच्छ सैनान्त्सह सोमेनागच्छदेवु मेवैना मेषु एतत् प्रहिणोति सोम मच्छ सैनः सह सोमेनागच्छति ॥ २१ ॥

तां यथैवादो देवाः†। व्युह्वयन्त गन्धर्व्वैः सा देवानुपावर्त्ततैवु मेवैना मेतद्यजमानो व्हिह्वयते सा यजमान मुपावर्त्तते ता मुदीचीमत्याकुर्व्वन्त्युदीची हि मनुष्याणां दिक् सो ऽएव यजमानस्य तस्मादुदीचीमत्या-कुर्वन्ति ॥ २२ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [ २. ४. ] ॥

---

* देवा –इति ग, घ। † देवा'–इति ग, घ। –

सोमक्रय विधातु माख्यायिका माह— "दिवि वै सोम इत्यादिना । "दिवि वा इति । 'वै'-शब्देन "तृतीयस्या मितो दिवि सोम"[1]—इत्यादिश्रुत्यन्तरप्रसिद्धिर्द्योत्यते । 'इह' भूमौ 'देवा' आसन्निति शेष । सोमागमनप्रयोजनम्— "तेनागतेन यजेमहीति । "त एत इत्यादि । परव्यामोहनकारिणी शक्तिः 'माया' । 'ते' देवाः 'एते' द्वे मायाभिरूपे स्त्रियौ सोमरक्षकाणां गन्धर्वाणां व्यामोहाय सृष्टवन्त इत्यर्थः । तथा चोत्तरत्राम्नास्यते— "ते एते माये असृजन्त सुपर्णीं च कद्रूं च वागेव सुपर्णीयं कद्रूः"-इति[2] । होतृमैत्रावरुणादीनां शंसनप्रदेशेषु पुरतः स्थापिता अग्नयो धिष्ण्याः होत्रीयादयः । ते खलु पुरा दिवि सोमरक्षकाः, पश्चात् सोमे आहृते सति तेन सह भूमावागत्य देवेभ्यो लब्धवराः सन्तोऽत्रापि सोमरक्षणाय धिष्ण्यतां प्राप्ताः । तथा चोपरिष्टाद् वक्ष्यन्ते— "स एते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा होत्राः"—इति[3] । तेषां ('धिष्ण्यानां') 'ब्राह्मणे' 'व्याख्यायते सौपर्णीकाद्रवम्, सुपर्णीकद्र्वोर्वृत्तान्तः सर्वोऽपि विवरिष्यत इत्यर्थः[4] । तत्र हि माया-

---

१— तै० सं० ६ १.६ २ ।

२— इहैव षष्ठेऽध्याये द्वितीये ब्राह्मणे द्वितीया कण्डिका द्रष्टव्या । "इयं वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयाः"-इति तै० सं० ६.१.६ १ । महाभारते आदिपर्वणि, भागवते च षष्ठे स्कन्धे एषा कथा पल्लविता, वस्तुतो रूपकमूलैवेति निर्मूलैव ।

३— इहैव षष्ठ द्वितीयस्य नवम्या द्रष्टव्यम् ।

४— "एतद् व्याख्यानं सौपर्णीकाद्रवमिति"—इहैव काण्डे ६ ७.७ ।

तयोः सुपर्णीकद्र्वोरुत्पत्तिः, तयोर्मिथः कलहः, परस्परजयपराजय-निमित्तकः समयबन्धः, ततः कद्रूजयः, पराजितायाः सुपर्ण्याः स्वात्मनिष्क्रयाय सोमोपहरणार्थं छन्दसां सुपर्ण्याः सकाशादुत्पत्ति-र्गायत्र्या च सोमाहरणम्,— इत्येवमादयोऽर्था अस्मिन्नेव काण्डे पञ्चमप्रपाठकादौ "विजामानो देवाश्च धिष्ण्याः"—इत्याद्युपक्रम्य, "दिवि वै सोम आसीदथेह देवास्ते देवा अकामयन्त"—इत्यादिना[1] आख्यास्यन्ते ॥ १ ॥

"तेभ्यो गायत्रीति । 'तेभ्यः' देवेभ्योऽर्थाय सुपर्ण्या निर्मिता 'गायत्री' छन्दोदेवता पक्षिरूपेण दिवि स्थितं 'सोमम्' 'अच्छ' अभिमुखं अगमत् । 'आहरन्त्यै' आहरन्त्यास्तस्याः स्वभूतं सोमम्, षष्ठ्यर्थे चतुर्थी[2], 'विश्वावसुः' नाम 'गन्धर्वः' 'पर्यमुष्णात्' अपजहार । ततः 'ते देवाः' 'अविदुः' । किमिति 'परस्तात्' द्युलोकात् 'सोमः प्रच्युतः', 'अथ' 'नः' अस्मान् 'नागच्छति' ; 'गन्धर्वाः' विश्वावसोर्भृत्याः 'वै' नूनं 'पर्यमोषिषुः' स्तेयं अकार्षुः 'इति' ॥ २ ॥

"ते होचुरिति । योषितः कामयन्त इति 'योषित्कामाः' । 'एभ्यः' गन्धर्वेभ्यो व्यामोहाय 'वाचं' 'प्रहिणवाम' प्रेषयाम । वाचं प्रेषयतामभिप्रायः— "आ नः सह सोमेनागमिष्यतीति ॥ ३ ॥

"ते गन्धर्वा इति । सोममुपायेनानयन्तीं स्वयमपि प्रति-निवर्तयिष्यत इति 'सोमो युष्माकं वागेवास्माकम्' अब्रुवन् । अथ गन्धर्वाविरोधेनैव देवैर्दृष्टं वाग्लाभोपायं दर्शयति— "इत्थो चेदागादित्यादि । प्रेषयामो वयं वाचं सोमैरिह 'आगात्'

---

१— ५प्र० १ब्रा० १—११क० । २— पा० २. ३ ६२ सू० १ वा० ।

आगच्छेत् । 'उ'-शब्दोऽनर्थकः । हे गन्धर्वाः ! 'एनाम्' 'इह' आगताम् 'अभीपद्दे' । 'वै'-इति वाक्यालङ्कारे । अभिपद्दन मभीपट्, अभिभवः । तेन बलात्कारेण 'मा भैष्ट' मा प्राहार्षत[1] । "न माङ्योगे[2]"-इत्यड्भावः । 'विन्दयामहै' यूयं वयं च वाचं विविध माकारयामः ॥ ४ ॥

एवं मिथः समये कृते गन्धर्वाणा माह्वानप्रकार माह— "तस्यै गन्धर्वा वेदानेवेति । 'प्रोचिरे' प्रवचन मकुर्वन् । तस्या वाचो वशीकरणायेति शेषः । एव मिदं प्रुवतां तेषा मभिप्राय:— "इति वै वयं विद्मेति । एवं खलु वाचः स्वाधीनत्वकरणोपायं जानीम इति, अय मुपायः सर्वेषां स्वकीयाना मभिमत इति प्रदर्शयितुं वीणायाभिधानम् ॥ ५ ॥

देवैः कृतं वाचः स्वीकरणोपाय माह—"अथ देवा वीणा मेवेति । 'वीणां वादयन्तः' निषादादिस्वरानुकूल्येन ध्वनि मुत्पादयन्तः, तदनु स्वयं 'गायन्तः' 'निषेदुः' उपसन्नाः । "इति वा इति । एव खलु 'ते' त्वदर्थं 'गास्यामः' । न केवल मीदृश गान मस्माकं किन्तु हे वाग्देवते ! 'त्वा' त्वाम् 'इति' एवम्प्रकारेण खलु तोषयामः । 'इति'-शब्दो वाक्यसमाप्तौ । 'सा देवान् उपाववर्त्त' उपावर्त्तते, प्रत्यावृत्ता । 'या' वाक् 'सुश्रुवः शंसतः' स्तोत्रशस्त्ररूप वेदानुवचनं कुर्वद्भ्यो गन्धर्वेभ्यः सकाशात् देवैः कृतं 'नृत्त' 'गीतम्' चोपावृत्ता, 'सा वै' सा खलु । 'सा' पूर्वं सोमाहरणाय

---

१— 'मा प्राहार्ष्ट'-इति ग । २— पा० सू० ६. ४. ७४ ।

प्रेषिता वाक् 'तत्' तदानीं 'मोघ' व्यर्थं सेत्रोपावृत्ता । स्तन-प्रक्षालनपरित्यागव्यापारोचितादिति भाव । इदानीन्तनस्त्रीणां मोघत्वभावत्व वाग्देवतोपक्रम मित्याह— "तस्मादिति । 'तां' वाचम् 'अनु' 'अन्या' अपि योषित । अप्रकृत मपि नर्त्तन गानवत् स्त्रीव्यामोहसाधन मिति गानेन सहोपन्यस्तम् । 'एता' योषित 'निमिश्लतमा इव' विशेषणीभूता, अत्यन्त मनुरक्ता भवन्तीति शेष । अत्र सर्व सर्वोऽप्यैतरेयब्राह्मणे सोमो वै राजा गन्धर्वेष्विति खण्डे[१] प्रपञ्चित ॥ ६ ॥

इदानीं गानविद्वार्थं मनूद्य[२] सोमक्रय विदधाति— "तद्वा एतदुभय मिति । यस्मात् सोमो देवानां स्व मासीत्, तस्मात् 'आगत्या एव सोमप्राप्त्या एव 'सोम' 'क्रीणाति' क्रीणीयात् । अपूर्वार्थत्वाद् यच्छब्द मनादृत्य विधि कल्पयितव्य । आगत्या अपि प्रयोजन माह— 'आगतेन यजा इति । अक्रीतस्य यागानर्हता माह— "अनागतेनेति । आगतोऽपि सोम क्रयव्यवहारेणानागतत्वात् अनागत इत्युच्यते ॥ ७ ॥

सोमक्रयात् प्राक् कर्त्तव्य च कञ्चिद्धोम विदधाति— "अथेति । 'ध्रुवायाम् आज्य परिशिष्ट प्राशनीयार्थं सुपयुज्य यद् घृत ध्रुवाया मवशिष्टम् 'तत्' 'जुह्वां' 'चतुष्कृत्व' चतुर्वार गृहीत्वा, 'बर्हिषा दर्भेण 'हिरण्यं' 'प्रबध्य' जुह्वाम् 'अवधाय आधाय जुहुयात् । तथा च कात्यायन— 'प्राक्सदाराणिविधाय धौव जुह्वा चतुर्विंगृहाति,

---

१— १ ४ १ (१ भा० १८७ पृ०) ।

२— 'इदानीं •—• मनूद्य –इत्यस्य स्थाने 'विद्वार्थं मनूद्य –इत्येव ग ।

बर्हिस्तृणेन हिरण्यं बध्वावदधात्येषा त इतीति[1]। हिरण्यावधान-प्रयोजनम्— "कृत्स्नेन पयसेति। पयःप्रकृतिकत्वाद् आज्यं पयः। सति हिरण्यस्य पयस्त्वे भवत्येव कार्त्स्न्यम्। तदेव कुत इत्यत आह— "समानजन्म वा इति। 'पयश्च हिरण्यञ्च' इति वस्तुद्वयं 'समानजन्म' समानोत्पत्तिकम्, एकत्रोत्पन्न मित्यर्थः। कथं समानत्वं जन्मन? 'हि' यस्मात् 'उभयम्' अपि 'अग्निरेतसम्' अग्नेः रेतो वीर्यं यस्योभयस्य तत् तथोक्तम्। यस्मादेव तस्मादित्यर्थः। "अन-सन्तान्नपुंसकाच्छन्दसि"–इति[2] अच् प्रत्यय समासान्तः। पयसो-ऽग्निरेतस्त्वं द्वितीयकाण्डे उक्तम्। तथाहि गोरुत्पत्तिं प्रस्तुत्य— "ता सु ह्यग्निरभिदध्यौ। मिथुन्येनया स्या मिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत् तत् पयोऽभवत्"–इति[3]। हिरण्यस्याप्यग्निरेतस्त्वं तैत्तिरीये— "आपो वरुणस्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ताः समभवन्, तस्य रेतः परापतत्, तद्धिरण्य मभवत्"–इति[4] ॥ ८ ॥

मन्त्र मभिधाय पुनरनुवदति— 'स हिरण्य मिति। 'स' अध्वर्युः। हिरण्यनिधानमन्त्रं त्रेधा विभज्य व्याचष्टे— "एषा त इत्यादिना[5]। हे 'शुक्र!' 'एषा' एतद्धिरण्यं 'ते' 'तनू' शरीरम्। तन्वपेक्षया स्त्रीलिङ्गता, अथवा 'एषा' शुक्ररिति व्याख्येयम्। 'एतत्' एव आज्य तव 'वर्चः' तेजः। शिष्टं ब्राह्मणेनैव व्याख्यातम्। व्याख्येयभागद्वय मुपादाय प्रथमभागस्य 'समभव'-शब्दस्यार्थ माह—

---

१— शा० श्रौ० सू० ७ ६ ७, ८। २— पा० सू० ५ ४ १०३।
३— २ स्था० ४ ब्रा० १५ क०। ४— तै० ब्रा० १, १, ३, ८।
५— "एषा ते"–इति मन्त्रस्तु वा० सं० ४ ११. १।

"यदाह तथा सम्राडित्यादि। 'यदाह' मन्त्र, 'एतत्' एतेन 'तथा सम्पृच्यस्व'— 'इत्येवाह'। अत्र सम्पर्कः एकीभाव। 'भ्राट्'-शब्दार्थं माह— "सोमो वै भ्राडिति। भ्राजमानत्वात् 'भ्राट्' सोम, अत "भ्राज्य भ्राज गच्छतीति ब्रुवतो श्रुति, सोम गच्छेत्युक्तवतीत्यर्थं। सोमप्राप्तिप्रकारस्त्वित्थं वेदितव्य,— हिरण्यसक्तात्र्यहोम सोम-क्रयणार्थं, स च सोमनयसोमार्थं इति विहिता साङ्गति सोमक्रयणी प्रीतिहेतुत्वेन प्रश्नमयमद्द्र्यं ॥ ८ ॥

सोमक्रयणानयनप्रयोजन माह— "तां यथैवेति। 'अद' व्यवहितकाले 'ता' वाच 'प्राहिण्वन्' गन्धर्वापहृतां प्रति प्रागमयन्। 'एव मेव' अध्वर्यु एतेन सोमक्रयणीप्रेरणेन प्रेरितवान् भवति। तयो क सम्बन्ध इति तत्राह— "वाग्वै सोमक्रयणीति। 'निदान' वाग्तव स्वरूपम् ॥ १० ॥

होममन्त्र पञ्चधा विभज्य व्याचष्टे— "स जुहोतीति[१]। "जूर-सीत्यादिना मन्त्रस्य[२] ब्राह्मणेनैव साकल्येन व्याख्यातत्वात् नास्माभि-र्व्याख्यात। 'जू'-इति सौत्रो धातुर्गत्यर्थ। जवति सोम प्रति गच्छतीति 'जू'। 'अध्या' वाग्रूपाया सोमक्रयण्या प्रतिज्ञातम्। मनसो वागाधारत्व सुपपत्त्या साधयति— "मनो वा इद पुरस्ताद् वाच इति। मन पूर्वरूपम्, वागुत्तररूपम्। मनो वा इति 'वै'-शब्देन "यद्धे मनसा ध्यायति तद्वाचा वदति'— इत्यादि[३]-श्रुत्यन्तरप्रसिद्धिर्द्योत्यते। "इत्य वदेति। यद्यपि हितोपदेष्टव्यमनो

१— का० श्रौ० सू० ७ ६ ८। २— वा० स० ४ १७ १।
३— शत० ता० १०का० ८प्र० १ब्रा० १३क०।

न वाग्व्यापारं करोति, तथापीद् वक्तव्य मिदं नेति गुणदोषविकल्पनस्य मनोव्यापारत्वाद् वाग्विधिनिषेधकर्त्तृव्यवहारः । व्यतिरेकदोषोपन्यासेन मनोवाचोरेकत्व दृढयति— "अलग्न मिवेति। 'अलग्न मिव' वक्तव्यपदार्थेन सहासम्बद्ध मिव, हृदयपूर्वकत्वाभावात् ॥ ११ ॥

"जुष्टा विष्णव इतीति। विष्णुशब्दस्याभिमत मर्थ माह— "जुष्टा सोमायेत्येवैतदाहेति। भुवनत्रयव्यापकत्वात् सोमो विष्णुः। "क्रियार्थानां प्रीयमाणः"-इति[1] उपतियोगे चतुर्थी। 'यं' सोमम् 'अच्छ' अभिमुखम् 'इम' गच्छेमो वयम् 'इति' अनेनाभिप्रायेण सोमायेत्याहेत्यर्थः। 'सत्यसवस' सत्यानुज्ञायाः 'तस्याः' देवैः प्रेरिताया वाचः 'प्रसवे' अनुज्ञायां सत्या मिति मन्त्रभागस्यार्थः। अस्य भागस्य तात्पर्य माह— "सत्यप्रसवा न एधीति। चरमभागस्य तात्पर्य माह— "तन्नो यन्त मिति। 'उद्गृ' उत्तमा ऋक्, उद्गृतया यज्ञसमाप्तिर्लक्ष्यते; अतो 'य' यज्ञसमाप्ति 'गच्छति', 'स' एव 'तन्नो यन्त्रम् अश्नुते' ॥ १२ ॥

हिरण्यस्यापोद्धारं विधाय प्रशंसति— "अथ हिरण्य मितिं[2]। प्राण्युपभोगस्य धनमूलत्वात् हिरण्यापोद्धारेण मनुष्येषु हिरण्यस्थापन च कृतं भवति। विपक्षे बाधदर्शनेन विहित मर्थ प्रशंसति— "स यत् सहिरण्य मिति। 'सहिरण्य' हिरण्येन सहित माज्यम्। 'पराक् प्रदह्यात्' अपुनरागमन 'मनुष्येभ्यः' सकाशाद् वर्जयेत्। अस्तु, किं तत इत्याह— "तन्नेति। 'तत्' तर्हि 'मनुष्येषु' 'हिरण्य' 'न' अनुवर्त्तेत ॥ १३ ॥

---

१— पा० सू० १. ४. ३६.।　　२— का० श्रौ० सू० ७. ९. १०।

अथोद्धार मनूद्य मन्त्र माह— "सोऽपोद्धरति शुक्र मसीति[1]। हे हिरण्य। त्व 'शुक्रं' दीप्तम् 'असि', 'चन्द्रं' सर्वाह्लादकम् 'असि', 'अमृतम्' अमरणधर्मकम् 'असि', अत्यन्ताग्निसंयोगेऽपि विनाशा-दर्शनात्। वैश्वदेव्याः सर्वदेवताप्रीतिकरत्वात् तदीय मथ मपोद्धारो होमानन्तरं कार्य मित्याह— "हुतेनेति। प्रागेव यद्यपोद्धरेत् तदा हिरण्यात्मकस्य पयसोऽभावात् आज्यं रूपं पयसोऽहुतं स्यात्, तस्मादुच्यते— "हुतेनेति। मन्त्रगतं हिरण्यस्य शुक्राद्यात्मकत्वं न स्तुत्यर्थ मित्याह— "यदेवैतत्तदाहेति। 'यदेव' 'एतत्' हिरण्यस्य स्वाभाविकं रूपम्, 'तत्' एव मन्त्रः 'आह'। यद्यपि हिरण्य माग्नेय तथापि सर्वप्रियत्वाद् वैश्वदेव मुच्यते। "प्रमुच्य तृण मिति। हिरण्ये बद्धं तृणं विमुच्य, 'बर्हिषि' अपिसृज्य, पुनः 'सूत्रेण' बध्नीयात्। तथाच सूत्रम्— "हिरण्य मुद्धृत्य वेद्यां तृणं विदधाति सूत्र-बद्धं हिरण्यं कुरुते"-इति[2] ॥ १४ ॥

"अथापर मिति। पूर्वोक्तप्रायणीयशेषाद्देवान्यतः 'चतुर्गृहीत माज्यं गृहीत्वा' 'यजमान अन्वारभस्व'-'इति' ब्रूयात्[3]। अध्वर्यो-रनुस्पर्शोऽन्वारम्भः। 'शालायै' शालायाः 'अपोर्णुवन्ति', द्वाराणीति शेषः। सूत्रकारेण "शालाया द्वाराण्यपिधाय"-इत्युक्तत्वात्[4]। पूर्वं विहितानि द्वाराणि सर्वाण्यपवृतानि कुर्युः[5]। 'द्वारे' आहवनीयात् प्राङ्गने, सोमक्रयार्थं 'दक्षिणतः' दक्षिणदेशे 'सोमक्रयणी' गौः

१— वा॰ सं॰ ४. २॰ १ । २— का॰ श्रौ॰ सू॰ ७. ६. ११ ।
३— का॰ श्रौ॰ सू॰ ७. ६. १२ । ४— का॰ श्रौ॰ सू॰ ७. ६. ७ ।
५— का॰ श्रौ॰ सू॰ ७. ६. १३ ।

'उपतिष्ठते'[1]। सोमक्रयण्यवस्थापनं प्रशंसति— "तत्प्रहिता मिति। 'एतत्' एतेनावस्थापनेन 'एना' सोमक्रयणीं 'तत्प्रहिता मेव सतीं' तया देवै प्रेषितया वाचा प्रेरिता सतीम्। अथवा 'तत्' तथा सती 'प्रहिता मेव' इमा सोमक्रयार्थं गमयेति स्वप्रेरिता सती मेवैताम् 'एतत्' एतेनावस्थापनेन 'प्राहैषीत्' प्रेरितवान् भवति। तस्या इतरगोसाधारण्य वारयति— "वाग्वै सोमक्रयणीति। "ता मेत-येति। 'तां' वाग्रूपा सोमक्रयणीं यस्मात् 'एतया' पूर्वविहितया "धूरसि"-इत्यादिमन्त्रदेवतया 'अप्रैषीत्' अध्वर्यु प्रेरितवान्। कया बुद्ध्या? 'मीतया' इतया 'सोम क्रीणातीति' ॥ १५ ॥

तस्या अभिमन्त्रणं विधत्ते— "अथोपनिष्क्रम्याभिमन्त्रयत इति[2]। 'उपनिष्क्रम्य' शालातो निर्गत्य। अभिमन्त्रणमन्त्रं विभज्य व्याचष्टे— "चिदसि मनासीत्यादिना[3]। मन्त्रवाक्यानि तु ब्राह्मणेनैव साकल्येन व्याख्यातानीत्यतो भाष्याभिप्रेक्षाय नास्ति। 'इदम्' इदानीं सर्व-विदितप्रकारेण 'चित्त' 'मन', मनसा 'वागनुवदति', चित्तेन ज्ञानम्। मनसा मत मेवार्थं वाक् प्रकाशयतीत्यर्थं। अतो हे सोमक्रयणि! त्वं चेतनावस्थापना सती 'चिदसि', तथा मननेन 'मना' अपि 'असि'। धीरूपत्वसमर्थनम्— "धिया-धियेति। 'धिया' इत्य वदिष्यामीति बुद्ध्या, चित्तवदभिवदनरूपेण कर्मणा वा। धीरिति कर्मनाम[4]। 'जिज्ञूयन्ति' जीवितु मिच्छन्ति मनुष्या।

---

१— "दक्षिणेन द्वारं सोमक्रयणी तिष्ठति"-इति का० श्रौ० ७ ६ १४।

२— का० श्रौ० सू० ७ ६. १५।

३— वा० सं० ४ १९ २०।

४— निघ० २. १. २१।

"जीव प्राणधारणे[1]"-इत्यस्मात् मनन्तादुठि क्ते रूपम्। तथा जीवनप्रकार स्वय मेव दर्शयति– 'अनूक्तेनेवेत्यादिना। 'अनूक्तेन' अनुवचनेन, वेदाध्ययनेनेत्यर्थः। 'प्रकामोद्यम्' इच्छया लौकिक-भाषणम्। 'गाथा' गद्यपद्यगीत्यात्मिका। सर्वत्र 'इव'-शब्दो वाक्यालङ्कारार्थः। एवंविधैर्वाग्विशेषैर्यतो जीवितु मिच्छन्ति, अतो धीरमौत्युक्तम्। सोमविक्रयिण आनत्यर्थं दीयमानत्वात् साचात् दक्षिणापि स्वल्पेषा वस्तुतो भवति। अत्र बल तदर्हतीति 'चत्रिया' गौ। पयआदिसाधनत्वेन तस्या वत्सकरत्व सिद्धम्। अथवा अत्र सोम, "सोमो वै राजा"-इति[2] सर्वत्र राजशब्देन व्यवहारात्। न यज्ञयोगाद्राजत्व किन्तु राजत्व नाम क्षत्रियत्व मित्युक्तम्। श्रूयते च– "यान्येतानि देवतया क्षत्रियाणीन्द्रो वरुण सोमो रुद्र पर्जन्य '-इत्यादि[3]। अतस्तत्सम्बन्धात् क्षत्रियैवैषा। यज्ञियत्व तु सिद्ध मेव। "अदितिरसीति। हे सोमक्रयणि। वस्तुतो वाग्रूपा त्वम् 'उभयत-शीर्ष्णी अदितिरसि' प्रदेशद्वयशिरोयुक्ता अखण्डनीया गौरसि। कुत एतदित्यत आह– "स यदिति। 'स' वक्ता 'यत्' यस्मात् 'एनया' अदित्या उभयत -शिरस्कया[4] निमित्तभूतया 'समा-नम्' एक मेव 'सद्' वाक्य 'विपर्यास व्यत्यासेन 'वदति'। तथाहि– 'भुङ्क्ष्व देवदत्त। तिष्ठ विष्णुमित्र!'–इत्यादौ 'यदेवापर'

---

१— भ्वा० प० ५६० धा०।

२— ऐ० ब्रा० १ ३ १, ३ २ १। अत्रापि ३ ३ ४ १।

३— उपरिष्टात् १३ ६ २ १९—२०।

४— 'उभयशिरस्कया'-इति ग।

वचनं देवदत्तेत्येवमादि[1], 'तदेव पूर्वं करोति' उभयवैपरीत्येन; 'यत् पूर्वं' भुङ्क्ष्वे-त्यादिकम्, 'तद्' 'अपरम्' "देवदत्त! भुङ्क्ष्व"-इत्यादिरूपेणापरं च 'करोति'। तस्माद्द्रूपां सोमक्रयणीम् 'उभयतः-शीर्ष्णी अदितिरसि'-'इत्याह' मन्त्रः। तैत्तिरीयके तु सोम-यागस्याद्यन्तभूतयोः प्रायणीयोदयनीययोः शिरोवत्प्रधानभूतयो-र्वर्त्तमानयोरदितिर्देवतास्ति, सामीत्यर्थः[2]। तथा च तैत्तिरीयकम्-"अदितिरस्युभयतः-शीर्ष्णीत्याह यदेवादित्यः प्रायणीयो यज्ञाना मादित्य उदयनीयः"-इति[3] ॥ १६ ॥

"सा न"-इति[4]मन्त्रभागे न इत्यस्य 'नः' सोमम्'-इत्यर्थं इति व्याचष्टे- "सा न सुप्राचीति। सोमक्रयणावसरे 'सुप्राची' भव, पुनर्यजमानगृहप्राप्त्यवसरे क्रीतेन सोमेन सह 'सुप्रतीची' भव। यथा देवप्रेरिता वाक् सोमेन सह पुनरागता, तदात्मकत्वात् त्वमपि सोमक्रयं साधयित्वा क्रीतेन सोमेन सह पुनरावर्त्तस्वेत्यर्थः ॥ १७ ॥

"मित्रस्त्वेत्यादि। मित्रदेवतया' पादबन्धनोपयोगं दर्शयति-"वरुण्या वा इति। पाशस्य वरुणस्वामिकत्वात्[5] वरुणदेवताका 'रज्जुः'। 'यत्' यदि तया 'अभिहिता' बद्धा स्यात्। तद्दोषपरि-हाराय मन्त्रे मित्रकर्तृकपादबन्धन मित्याह- "एतदा अवरुण्य

1— 'देवदत्त [ विष्णुमित्रेत्यादिकम्, तत् पूर्व देवदत्त भुङ्क्ष्व ] इत्येवं-रूपेण'-इति ग।

2— "द्वे शीर्षे प्रायणीयोदयनीये"-इति यास्कः ( निरु० प० ११ ७. )।

3— तै० सं० ६ १. ७. ८।

4— वा० स० ४ १८. १।

5— "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ( ऋ० सं० १. २. १५. )"-इत्यादिश्रुते।

मिति। "सा यथेति। दृष्टान्तेन मन्त्रभागपाठमात्राद् सन्धनं भवत्येवेति समर्थ्यते ॥ १८ ॥

"पूषाध्वन इत्यादि। पोषणात् 'पूषा' 'पृथिवी'। "यस्य वा इय मिति। 'अध्वन्' अध्वनि। 'स्खला' "स्खल चलने"[1]। 'प्रच्युतिः' विनाशः। यस्मात् पूष्णा रक्षितस्य प्रच्युतिर्नास्ति, 'तस्मात् "पूषाध्वन."-इत्याह' मन्त्रः। पूष्णो मार्गाणां कर्तृत्वं "पूषा त्वेतो नयतु"-इत्यादि[2]मन्त्रप्रसिद्धम् ॥ १९ ॥

"इन्द्रायाध्यक्षायेति। अध्यक्षः स्वामी, तथाविधेन्द्रार्थं पूषा पात्वित्यर्थः। सोमस्येन्द्रस्वामिकत्वात् तदर्थायाः सोमक्रयण्या अपि तत्स्वामित्वम्। 'स्वध्यक्षा असत्' एषा शोभनस्वामिका भवेत्,-इत्यनेनाभिप्रायेण मन्त्र एव माहेत्यर्थः। "अनु त्वा मातेत्यादि[3]। हे सोमक्रयणि! 'त्वा' त्वां मात्रादिबन्धुवर्गः क्रयार्थं गमनम् 'अनुमन्यताम्' अनुमतिं करोत्विति मन्त्रभागस्यार्थः। 'सगर्भ्यः' समानगर्भभवः, अनेन 'भ्राता' विशिष्यते। 'सयूथ्यः' यूथं सजातीयानां सङ्घः, समाने यूथे भवः 'सयूथ्यः', तादृशः 'सखा' च 'अनु' मन्यताम्। "यत्ते जन्मेति। तादृशास्तव सम्बन्धि 'यत्' तव 'जन्म' जायत इति जन्म, मात्रादिबन्धुवर्गः, 'तेन' 'अनुमता'। "सा देवि" -इत्यत्र[4] सोमस्य देवत्वं विधिविहितसोमेनानन्यत्वाच्च सिद्धम्। सोमक्रयण्या देवीत्वं न स्तुत्यर्थं मित्यवगमयितुं "यद्वाक् सोम मित्युक्तम्। "इन्द्राय सोम मिति। सम्पादये इति शेषः। अतो 'देव मच्छे-

---

१— धा० प० ८०५ धा०। २— ऋ० सं० ८. ६. २५।

३— वा० सं० ४. २०. १।

४— "सा देवि देव मच्छेहीन्द्राय"-इति मन्त्रापरार्द्धे (वा० सं० ४. २०.)।

शीति' पूर्वेणान्वय । "इन्द्रो वै यज्ञस्य देवता" इति । 'यज्ञस्य' तत्साधनस्य सोमस्य 'इन्द्रो देवता'। तथा च तैत्तिरीयकम्— "इन्द्राय हि सोम आह्रियते"-इति[१]। "रुद्रस्त्वा वर्त्तयत्विति। रुद्रस्य पश्वधिपतित्वात् स्वय मग्रहन् पुनरावर्त्तयत्वित्यभिधान तस्या अप्रणाशाय भवति। कथं शिवाप्रमद्र इति तत्राह— "रुद्र शीति। 'नाति' वर्त्तत इति शेष। 'स्वस्ति सोमसखेति। "स्वस्तीत्य-विनाशनाम" इति निरुक्तम्[२]। उक्तो नाशप्रमद्र, अत सेवेण सोमसखा यस्य तेन सहित पुनरागच्छेति मन्त्रस्यार्थ ॥ १० ॥

इत्य मन्त्रवाक्यानि विभज्य तात्पर्य मभिधायेदानीं कृत्स्न-मन्त्रतात्पर्य माह— "तां यथैवादो देवा इत्यादिना। सोमक्रयण्या वस्तुतो वागात्मकत्वात् तस्या सोमक्रयप्रदेशप्राप्तिप्रार्थन देवै कृत सोमानयनार्थवाक्प्रेषणस्थानीयम् पुनरागमनप्रार्थनन्तु देवानां पुनर्वागाह्वानस्थानीय मिति सङ्ग्रहार्थ ॥ ११ ॥

"तां यथैवाद इति। यथा विप्रकृष्टे काले, पूर्व मित्यर्थ। 'गन्धर्वै' सोमपालै विश्वावसुप्रभृतिभि भाक 'व्याह्वयन्त' विविध माह्वयन। गन्तव्यद्वारदेशव्याया[३] सोमक्रयण्या उदक्प्रापण मार्थ वाद विधत्ते— "ता मुदीचीं मिति"। 'उदीचीं' मत्याकुर्वन्ति उदङ्मुखा यन्ति, 'अध्वर्यु' प्रमुखा। 'सा एव मैव मनुष्यान्सर्वत्र्त्ति त्वाद् यजमानस्यापि दिक्॥ १२ ॥ १ [ २ ४ ]॥

१— तै० स० ६ । १ । ११।   २— निरु० ६ । ७ ।।

३— 'द्वारदक्षिणदेशस्याया'—इति ग०।

४— का० श्री० सू० ७ । ६ । १६ द्रष्टव्यम्

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोमहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरौंस्त्रिदशतरुलताधेनुभीवर्णभूमीः ।
रत्नोम्रा रुक्मवाजिद्विपमहितरथौ सायणि[1] सिङ्गमार्यो,[2]
यश्रार्णौद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलं स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पावमात्सिङ्गनार्यः[3] ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥

१— 'सायण'—इति स्यात् ?
२— 'सिङ्गार्य' स्यात् ? सिङ्गशब्देश्मस्य राजेति तस्यार्थं सम्पद्येत ।
३— एतच्छ्लोकद्वयपाठभेदास्तु पूर्वमेव मया दर्शितो न लेख्याः ।

[ अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ]

सप्त पदान्यनुनिक्रामति। वृङ्क्ते एवैना मेतत् तस्मात् सप्त पदान्यनुनिक्रामति यत्र वै वाचः प्रजातानि छन्दाꣳसि सप्तपदा वै तेषां परार्ध्या शक्करी ता मेवैतत्परस्तादर्वाचीं वृङ्क्ते तस्मात् सप्त पदान्यनुनिक्रामति ॥ १ ॥

स वै वाच एव रूपेणानुनिक्रामति। वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासीति वस्वी ह्येषादितिर्ह्येषादित्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा बृहस्पतिष्ट्वा सुम्ने रम्णात्विति ब्रह्म वै बृहस्पतिर्बृहस्पतिष्ट्वा साधु नावर्त्तयत्वित्येवैतदाह रुद्रो वसुभिराचक इत्युप्रणाशायैतदाह रुद्रꣳ हि नाति पशवः* ॥ २ ॥

अथ सप्तमं पदं पर्युपविशन्ति। स हिरण्यं पदे निधाय जुहोति न वा अनग्नावाहुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति वज्रो वा आज्यं वज्रेणैवैतदाज्येन स्पृणुते ताꣳ स्पृत्वा स्वीकुरुते ॥ ३ ॥

* 'पशव'—इति ग, घ।

स जुहोति। अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मीतीयं वै पृथिव्यदितिरस्यै हि मूर्द्धन्* जुहोति देवयजने पृथिव्या ऽइति देवयजने हि पृथिव्यै जुहोतीडायास्पद मसि घृतवत् स्वाहेति गौर्व्वा ऽइडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्ध्येतदभिहुतं भवति ॥ ४ ॥

अथ स्फ्य मादाय परिलिखति। वज्रो वै स्फ्यो वज्रेणैवैतत्परिलिखति विष्कृत्वः परिलिखति त्रिवृतैवै-तद्वज्रेण समन्तं परिगृह्णात्यनतिक्रमाय ॥ ५ ॥

स परिलिखति। अस्मे रमस्वेति यजमाने रमस्वेत्येवै-तदाहाथ समुल्लिख्य पद स्थाल्या संव्वपत्यस्मे ते बन्धु-रिति यजमाने ते बन्धुरित्येवैतदाह ॥ ६ ॥

अथाप उपनिनयति। यत्र वा ऽअस्यै खनन्तः क्रूरी-कुर्व्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप उपनिनयति ॥ ७ ॥

अथ यजमानाय पदं प्रयच्छति। त्वे राय इति पशवो वै रायस्त्वयि पशव इत्येवैतदाह तद्यजमानः प्रतिगृह्णाति मे राय इति पशवो वै रायो मयि पशव इत्येवैतदाह ॥ ८ ॥

---

* 'मूर्द्ध'–इति क, 'मूर्द्धन्'–इति ख।

अथाध्वर्युरात्मान मुपस्पृशति। मा व्ययुः राय-स्पोषेण वियौष्मेति तयो ह्याध्वर्युः पशुभ्य आत्मानं नान्तरेति ॥ ८ ॥

अथ पत्न्यै पदं प्रतिपुराहरन्ति। गृहा वै पत्न्यै प्रतिष्ठा तद् गृहेष्वेवैना मेतत् प्रतिष्ठायां प्रतिष्ठापयति तस्मात् पत्न्यै पदं प्रतिपुराहरन्ति ॥ १० ॥

तां नेष्टा व्याचयति। तोतो राय इत्यथैनाः सोम-क्रयण्या सङ्ख्यापयति वृषा वै सोमो योषा पत्न्येव वा ऽअत्र सोमो भवति यत् सोमक्रयणी मिथुन मेवैतत् प्रजननं क्रियते तस्मादेनाः सोमक्रयण्या सङ्ख्या-पयति ॥ ११ ॥

स सङ्ख्यापयति। समख्ये देव्या धिया सन्दक्षिणयो-रुचक्षसा। मा म ऽआयुः प्रमोषीर्मो ऽअहं तव वीरं विदेय तव देवि सन्दृशीत्याशिष मेवैतदाशास्ते पुत्रो वै वीरः पुत्रं विदेय तव सन्दृशीत्येवैतदाह ॥ १२ ॥

सा या बभ्रूः पिङ्गाक्षी*। सा सोमक्रयणी यत्र† वा ऽइन्द्राविष्णू वेधा सहस्रं व्यैरयेतां तदेकात्यरिच्यत

---

* 'पिङ्गाक्षौ'–इति ग, घ।

† 'सा वा०—० क्रयणी। यत्र'–इति क।

तां त्रेधा प्राजनयतां तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत ॥ १३ ॥

सा या बभ्रुः पिङ्गाक्षी[*]। सा सोमक्रयण्यथ[†] या रोहिणी सा वार्त्रघ्नी यामिदꣳ राजा सङ्ग्रामं जित्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति ॥ १४[‡] ॥

सा या बभ्रुः पिङ्गाक्षी[§]। सा सोमक्रयणी स्याद्यदि[¶] बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी वार्त्रघ्नी स्याद्रोहिण्यै ह त्वेव श्येताक्ष्या आशां नेयात्[‖] ॥ १५ ॥

सा स्यादप्रवीता। वाग्वा एषा निदानेन यत्सोमक्रयण्ययातयाम्नी वा इयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् सा स्यादखण्डाकूटाकाणाकर्णालक्षितासप्तशफा सा ह्येकरूपैकरूपा हीयं वाक् ॥ १६ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [ ३. १. ] ॥

---

[*] 'पिङ्गाक्षी'–इति ग, घ। [†] 'सा या०—० क्रयणी। अथ'–इति क।

[‡] इतोऽनन्तरम् "कण्डिकासङ्ख्या १६००"–इति सर्वे पुस्तकेषु।

[§] 'पिङ्गाक्षी'–इति ग, घ। [¶] 'सा या०—० स्यात्। यदि'–इति क।

[‖] 'श्याशान्नेयात्'–इति वेबर् दृष्टोऽपि, 'श्याशां नेयात्'–इति ग, घ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ तृतीयाध्याये सोमक्रयण्यनुगमनाद्युपयुक्ता प्रयोगा निरूप्यन्ते । तत्र, सोमक्रयण्या अनुक्रमणं विधत्ते— "सप्त पदानीति । "अनुनिष्क्रामतीति"[1] । सा यदा प्रथमं पदं निष्क्रामति, तदा तदनु अध्वर्युः स्वयं अपि प्रथमं पदं निष्क्रामेत्, द्वितीयं मनु द्वितीयम्। तत्र 'इष्टे' इत्यस्मिन्नपि वजिरादपूर्वो द्रष्टव्य, आवर्जितवान् भवति। प्रथमन्त्र प्रथमति— 'वस्वा इति'[2] । 'वस' छन्दसा मुत्पत्तिकाले 'वाच' सुपर्णीरूपेणावस्थिताया सकाशात् 'गायत्र्यादीनि' यानि छन्दांसि । वाच सकाशात् छन्दसा मुत्पत्तिरुक्तास्त्र "वागेव सुपर्णी" इत्यभिधाय 'तयेति मा छन्दांसि स्वाहे -त्याख्याता'[3]। तेषां छन्दसां 'परार्द्धा शक्वरी'। परार्द्धे उपरि भागे भवा परार्द्धा, "परावराधमोत्तमपूर्वाच्च" इति[4] यत् । शक्वरी सप्तपदत्व प्रसिद्धम्[5] । 'परस्माद्वाचीं इष्टे'-इति । पदादिस्वमेव 'परस्मात्'

---

१— अनुनिष्क्रमणं पदोपरि पदनिधानम् । यत्र सोमक्रयणी पदं निदधाति, तत्र स्वपदयोर्निधानमिति भाष्यदीपिकाव्याख्याने सोमनाथ दीक्षित (४ १)।

२— का० श्रौ० सू० ७ ६ १० द्रष्टव्यम् ।

३— ४प० ५ब्रा० १—८ कण्डिकासु द्रष्टव्या ।

४— पा० सू० ४ ३ ५ ।

५— "सप्तपदा शक्वरी" इति श्रुतिश्च तै० सं० ६ १ ८ १ ।

अवस्थितां गायत्र्याद्यन्तर्भावेन सर्वच्छन्दोरूपां शक्वरीम् 'सर्वाशी स्त्रे' आस्त्रे, स्वाभिमुखम् आवर्तितवान् भवतीत्यर्थः ॥ १ ॥

अनुक्रमणं मन्त्रस्य कर्त्तव्य मित्याह— 'स वै वाच इति । अनुमन्त्रणमन्त्रे सोमक्रयण्यवस्थादिरूपताभिधानं स स्तुत्यर्थ मित्याह— "वस्वी घोषेत्यादिना[1]। वसुरुद्रादित्याः सवनत्रयदेवता । 'अदिति' प्रायणीयोदयनीयदेवता । 'चन्द्र'-शब्देनाह्लादकत्वादिह सुवर्णम् । हे सोमक्रयणि ! त्वं वस्वादीनां स्वरूपं असि । तदपेक्षित सोमसाधनत्वात् 'वस्वी घोषा'-इत्यभिधानम् । 'रण्वातु' रमयतु[2] । "रमु क्रीडायाम्[3]", व्यत्ययेन श्ना[4] । बृहस्पतिस्त्वेत्यस्यार्थं आह— "ब्रह्म वै बृहस्पतिरिति । 'बृहस्पति' बृहतो मन्त्रस्य पालयिता, तदभिमानी देवता, गच्छन्तीं त्वां 'सुम्ने' सुखकरे । यत् सुखकरं तत् साधु अत "सुम्ने रण्वातु"—इति यदाह, तेन 'साधुना' मार्गेण 'आवर्त्तयत्वित्येवाह' । "रुद्रो देवो वसुभिरिति । हे सोमक्रयणि ! तव सुखं 'वसुभि' सहितो 'रुद्र' 'आचके' कामयते । इति मन्त्रभागस्यार्थः । रुद्रोत्सुक्यप्रार्थनाया उपयोगं दर्शयति— "अप्रणाशायेति । शिष्टं गतम्[5] ॥ २ ॥

"अथ सप्तम पद मिति[6] । यजमान मितरांश्चर्त्विजोऽपेक्ष्य 'पर्युपविशन्ति'-इति बहुवचनम्, 'परि' परितः । 'स' अध्वर्युः ।

१— वा० सं० ४ २१ द्रष्टव्य ।

२— "रण्वातिः सयमनकर्मा विसर्जनकर्मा वा —इति निरु० १० १ ८।

३— भा० धा० ८५३ धा० । ४— पा० सू० ३ १ ८५।

५— १२० पृ० ५ प० । ६— का० श्रौ० सू० ७ ६ १८ क द्रष्टव्यम् ।

स्फ्यस्य परिलेखनं सार्थवादं विधत्ते— 'अथ स्फ्यमादायेति'[1]। स्फ्यस्य वज्रत्वं तैत्तिरीयैः स्पष्टमाम्नातम्— "इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत्, स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयम्'-इति[2]। परिलेखनस्य त्रिरावृत्तिं विधत्ते— "त्रि इत्त इति ॥ ५ ॥

परिलेखनमन्त्रं विधत्ते— 'स परिलिखतीति'[1]। 'अस्मे'-इत्यस्य तात्पर्यमाह— 'यजमाने इति'। 'अस्मे' अस्मदीये 'यजमाने'। सप्तमपदपांसोः स्थाल्यां स्थापनं समन्त्रकं विधत्ते— 'अथ समुल्लिख्येति'[3]। हे पदपांसो। 'ते' तव मन्त्र' स्नेहयन्त्र 'अस्मे' अस्मदीये 'यजमाने' अस्त्विति मन्त्रार्थः[4]। "सुपां सुलुक्'-इत्युभयत्र सप्तम्याः शे भावः[6] ॥ ६ ॥

"अथाप इति"[7]। परिलिखितप्रदेशे अपां निनयनं विधाय प्रशंसति— 'यद्वेत्यादिना'। खननं हिंसात्मकत्वात् क्रूरीकरणम्। अपाञ्च शैत्यनिवारकत्वाच्छान्तिरूपत्वं प्रसिद्धम्। अत 'शान्त्या अद्भिः' शान्तिरूपाभिरद्भिः तत् क्रौर्यं शमितवान् भवति। निनयनस्य प्रयोजनान्तरम्— "तदद्भिरिति ॥ ७ ॥

"अथ यजमानायेति। 'पद प्रयच्छतीति'[8]। 'पद स्थालीस्थ

---

१— का० श्रौ० सू० ७. ६ १९ अष्टथम्,
२— तै० सं० ६ १ ३ ११। ३— वा० सं० ४ २२ २।
४— का० श्रौ० सू० ७ ६ २० अष्टथम्। ५— वा० सं० ४ २२ ३।
६— पा० सू० ७ १ ३९। ७— का० श्रौ० सू० ७ ६ २१ क।
८— का० श्रौ० सू० ७ ६ २१ ख।

पदर्याप्तम् । 'रै'-शब्दार्थ माह— "पशवो वै राय इति । 'त्वे'-इत्येतत्[1] सप्तम्यन्त मिति व्याचष्टे—"त्वयि पशव इत्येवैतदाहेति । अध्वर्युदृत्तस्य पाशो ममन्तक प्रतिग्रह विधत्ते— "तद्यजमान इति[2] । 'ते राय' इति[3] पूर्ववद् व्याख्येयम् ॥ ८ ॥

"अथाध्वर्युरात्मान मिति[4] । 'वय वियौम' इति[5] पूजार्थं बहुवचनम् । वियुक्ता मा भूता यौषेति । "यु मिश्रणामिश्रणयो[6]"-इत्यस्य लुङि माङ्योगादड्भाव[7] ॥ ९ ॥

'अथ पत्न्या इति । 'प्रतिपरावहरन्ति' प्रयच्छेयुरित्यर्थं । तथा च कात्यायन — "हृत्वा पत्न्यै पद प्रयच्छति"-इति[8] । पत्नी खलु प्रतिष्ठानिलयनरूपा । गृहाणां बहुत्वेऽपि प्रतिष्ठाया एकत्वादेक-वचनम् । गृह यथा धान्यादिनिक्षेपस्थान मेव पत्न्यपीत्यर्थ । स्पष्ट मन्यत् ॥ १० ॥

"तां नेष्टेति । 'ता' गृहीतपांसुपतनीम् । 'तोत '-इति तोक-समानार्थं । 'राय' धनानि, 'तोत' पुत्र, स्त्रीकरोत्वित्यर्थं । यद्वा 'तोत' त्वत्त, त्वयि राय सन्त्विति प्रैष[9] । "अथैना सोमक्रयण्येति । 'एना' पत्नीं 'सोमक्रयण्या' 'सङ्ख्यापयति' 'नेष्टा' । सोमक्रयणी येयम्, तया पत्नी मनेन मन्त्रेण दर्शयेत् । गतिबुद्ध्याद्यर्थाभावात्[10] सोमक्रयण्या कर्मत्वाभाव । सङ्ख्यापन प्रशसति— "एषा वा इति ।

---

१— वा० स० ४ २२ ४ ।　　६— धरा० प० २३ धा० ।
२— का० श्रौ० सू० ७ ६ ४२ ।　　७— पा० सू० ६ ४ ७४ ।
३— वा० स ४ २२ ५ ।　　८— का० श्रौ० सू० ७ ६ २४ ।
४— का० श्रौ० सू० ७ ६ २३ ।　　९— वा० स० ४ २२ ७ ।
५— वा० स० ४ २२ ६ ।　　१०— पा० सू० १ ४ ५२ ।

"इषा वै सोम"-इति सोमो निर्दिष्टः। कस्तस्य प्रसङ्ग इति तत्राह- "एष वा अत्रेति। 'अत्र' सोमक्रयप्रस्तावे सोमक्रयण्याः सोमसम्पत्त्यर्थत्वात्। सैव 'एष सोम'। सोम इति विधेयस्य पुंलिङ्गत्व मपेक्ष्यैव इति पुंलिङ्गत्वम्। अतः 'एतत्' एतेन उभयोः सम्बन्धेन उत्पादनसमर्थं 'मिथुन मेव' सम्पादितं भवति ॥ ११ ॥

"स सङ्ख्यापयतीति। सङ्ख्यापनमन्त्र पठति- "समख्ये देव्येत्यादिना[1]। अत्र कात्यायनः- "एनां वाचयति सोमक्रयणी च समीक्ष्यमाणां समख्य इतीति[2]। मन्त्रस्याय मर्थः। अहं 'धिया देव्या' धीर्देवी हि सोमक्रयणी माध्यकार[3]। अतो धापूपया सोमक्रयण्या समख्ये दृष्टा भवामीत्यर्थः। "ख्या प्रकथने" इत्यस्य लङ्युत्तमैकवचने "अस्यतिवक्ति"-इत्यादिना[4] अङ्, कर्मणि द्रष्टव्य; अत एवात्मनेपदम्। "दक्षिणासि यज्ञियासि"-इति प्रागुक्तात्[6] दक्षिणापि सोमक्रयणी। अतः 'उरुचक्षसा' प्रभूतदर्शनया तया समख्ये। अथ प्रत्यक्षवाद्। हे सोमक्रयणि। 'मे आयुः मा प्रमोषीः'। 'मा उ अह' अह मपि 'तव' आयु मा प्रमोषिषम्। हे 'देवि!' 'तव' 'सन्दृशि' सन्दर्शने सति 'वीरं' पुत्र 'विदेय' लभेय। अथ मन्त्र आशीः पर इत्याह- "आशिष मेवैतदिति। 'वीर'-शब्दार्थ माह- "पुत्रो वै वीरः"-इति ॥ १२ ॥

---

१— वा० सं० ४ २३। २— का० श्रौ० सू० ७. ६ २६।
३— पुरस्तात् २ ४. १६ ( १३३ पृ० )।
४— अष्टा० म० १० ५० धा०। ५— पा० सू० ३. १. ५२।
६— वा० स० ४. १९ मन्त्रव्याख्याने पुरस्तात् २ ४. १६ ( १२२ पृ० )।

सोमक्रयण्या लक्षणमभिधातुमाह— "सा या बभ्रुः पिङ्गाक्षीत्यादिना। बभ्रुः पिङ्गाक्षी सोमक्रयणी श्रेष्ठेत्यभिधातुमाख्यायिकामाह— "यत्र वेति। सोमक्रयदक्षिणाविभागसमये 'सहस्रं' त्रेधा 'व्यैरयेता' विभज्य प्रेरितवन्तौ। 'ताम्' अतिरिक्तां 'त्रेधा' बभ्रुरुणरोहिणीरूपेण त्रिविधां 'प्राजनयताम्' उदपादयताम्। उत्पादनप्रकारस्तैत्तिरीयकेऽपि स्पष्ट माम्नातः— "ता मधु प्रावेशयन्त्सोमायो देहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रिंशता च त्रिभिश्च शतैः सहोदैत्"—इत्यादिना[1]। अतः 'एतर्हि' इदानीमपि॥ १३ ॥

त्रिविधायास्तस्या गोः मुख्यानुकल्पत्वभेदेन सोमक्रयणीत्वं प्रदर्शयितुं तद्विभागमाह— "सा येति। 'बभ्रु' पतुवर्णा, पिङ्गले अक्षिणी यस्याः सा 'पिङ्गाक्षी', 'सा' सोमक्रयणार्हत्वात् 'सोमक्रयणी'। 'रोहिणी' रोहितवर्णा, सा 'वार्त्रघ्नी' वृत्रघ्न इन्द्रः, तद्देवत्या। इदानीं ततो 'राजा सङ्ग्रामं जित्वा' परकीयाद् राष्ट्रात् 'या' रोहिणीम् 'उदाकुरुते' स्वीकरोति[2], सा वार्त्रघ्नीत्यर्थः। 'श्येताक्षी' कृष्णलोचना, 'सा पितृदेवत्या'। 'इद' इदानीं 'पितृभ्यः' अर्थाय 'घ्नन्ति'॥ १४ ॥

इत्थं विधास्वरूपमभिधाय विनियोगप्रकारमाह— "सा येति। बभ्रु-पिङ्गाक्षी सोमक्रये मुख्या। तदभावे 'अरुणा' अव्यक्तरागा। तदभावे 'रोहिणी'। सा यदि श्येताक्षी स्यात्, तादृश्या 'याजाम्' अपि 'नेयात्' न कुर्यात्। अत्र कात्यायनः— "सोमक्रयणी तिष्ठ-

---

१— तै॰ सं॰ ७ । १ । ६ । २ ।　　२— 'वशीकुरुते'—इति च-पाठः।

विन्देत्सोमपर्याणहनस्यैव द्व्यङ्गुलं वा* त्र्यङ्गुलं वावकृन्ते-
दुष्णीपभाजनमध्वर्युर्वा यजमानो वा सोमोपनहनं†
मादत्ते य एव कश्च सोमपर्याणहनम् ॥ ४ ॥

अथाग्रेण राजानं विचिन्वन्ति । तदुदकुम्भ उपनिहितो भवति तद् ब्राह्मण उपास्ते तदभ्यायन्ति मास्वः ॥ ५ ॥

तदायत्सु वाचयति । एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानां‡ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्येकं वा ऽएष क्रीयमाणोऽभिक्रीयते छन्दसामेव राज्याय छन्दसां साम्राज्याय घ्नन्ति वा ऽएनमेतद् यदभिषुण्वन्ति तमेतदाह छन्दसामेव त्वा राज्याय क्रीणामि छन्दसां साम्राज्याय न वधायेत्यथैत्य प्राङुपविशति§ ॥ ६ ॥

सोऽभिमृशति । आस्माकोऽसीति स्व इव ह्यस्यैतद् भवति यदागतस्तस्मादाहास्माकोऽसीति शुक्रस्ते ग्रह्य‖ इति शुक्रो ह्यस्माद् ग्रहं ग्रहीष्यन् भवति विचितस्त्वा विचिन्वन्त्विति सर्वत्वायैतदाह ॥ ७ ॥

---

* 'वा'–इति वेबर् पुस्त॰ । † 'सोमोपनहन'–इति ग, घ ।
‡ 'ब्रूताच्छन्दोसाम्राड्'–इति मा॰–सम्मत इति का॰ वेबरः ।
§ 'प्राङुपविशति'–इति ग, घ । ‖ 'ग्रहा'–इति ग, मा॰–सम्मत ।

अत्र हैके। तृणं वा काष्ठं वा वित्वा*प्रास्यन्ति तदु तथा न कुर्यात् क्षत्रं वै सोमो विडन्या ओषधयोऽन्नं वै क्षत्रियस्य विट् स यथा ग्रसितमनुदायाच्छिद्य परास्येदेवं तत् तस्मादभ्येव मृशेदचितस्त्वा विचिन्वन्निति तद्य एवास्य विचेतारस्त एनं विचिन्वन्ति ॥ ८ ॥

अथ व्यासः। द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु मात्रो† यो चाप्यन्या मात्रा ॥ ९ ॥

सावित्र्या मिमीते। सविता वै देवानां प्रसविता तथो हास्मा एष सवितृप्रसूत एव क्रयाय भवति ॥१०॥

अतिच्छन्दसा मिमीते। एषा वै सर्वाणि छन्दांसि यदतिच्छन्दास्तथो हास्यैष सर्वैरेव छन्दोभिर्मितो भवति तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥

स मिमीते। अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम्‡।

* 'भित्वा'-इति सा०-सम्मतः।

† 'मात्रो'-इति क, ख, सायणाभिमतोऽयं पाठ इति डा० वेबरस्य।

‡ 'कवि'-इत्यनुस्वाररहित पाठः क ग पुस्तकयो, डा०-वेबर दृष्टश्च।

त्यलक्षिताव्यङ्गाप्रवीतारज्जुबद्धा वभ्रु पिङ्गला, पिङ्गलाभावेऽरुणा, अरुणाभावे रोहिण्यश्वेताक्षी"-इति[1] ॥ १५ ॥

सोमक्रयण्या गर्भात् प्राक् अवस्थानं सार्थवादं विधत्ते— "सा स्यादप्रवीतेति ।" "वी गतिप्रजननकान्त्यशनखादनेषु[2]", अत्र प्रजनन मर्थः । 'अप्रवीता' अगृहीतगर्भेत्यर्थः । 'अयातयाम्नी' अगतरसा । बहुभिरपक्रदुह्यमानाया अपि वाचो गतरसत्वं प्रसिद्धम् । अतः सोमक्रयण्या वाग्रूपत्वादयातयाम्न्या भवितव्यम्[3] । अत एकहायनी-परिग्रहे गर्भरूपरसनिर्गमाभावात् वागानुगुण्यं भवति । तस्माद् अप्रवीता भवेत् । इत्थं वर्णवयोविशेष मभिधाय अङ्गवैकल्याभाव माह— "अवण्डाकूटेति । 'वण्डा' वर्द्धिष्णुः, 'अवण्डा' तद्विपरीता भवेत् । एव मुत्तरत्रापि । 'कूटा' एकश्रृङ्गी, 'काणा' एकाक्षी, 'कर्णा' छिन्नकर्णा, 'लक्षिता' तप्तायःशलाकया विद्धिता, 'सप्त शफा' एकस्मिन् पादे एकेन शफेन हीना, उक्तदोषवर्जिता । 'एकरूपा' उक्तदोषवर्जितत्व मेवैकरूप्यम्, सम्पूर्णावयवेत्यर्थः[4] ॥ १६ ॥ ४ [ ३. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

---

१— का० श्रौ० सू० ७ ६. १४ द्रष्टव्यम् ।  २— चुरा० प० ३८ धा० ।
३— "वाग् वा एषा सोमक्रयणी"-इति तै० सं० ६ १. ७. ८ ।
४— तैत्तिरीयेऽप्येव मेव ६. १. ७ १६—१८ द्रष्टव्यम् ।

( अथ द्वितीय ब्राह्मणम् )

पदृः समुप्य पाणी ऽअवनेनिक्ते । तद्यत्पाणी ऽअवनेनिक्ते व्वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्मात् पाणी ऽअवनेनिक्ते ॥ १ ॥

अथास्यै हिरण्यं बध्नीते । द्वयं वा ऽइदं न तृतीय मस्ति सत्यञ्चैवानृतं च सत्य मेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्यꣳ सत्येनाꣳशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा ऽअस्यै हिरण्यं बध्नीते ॥ २ ॥

अथ सम्प्रेष्यति । सोमोपनहन माहर सोमपर्य्याणहन माहरोष्णीष माहरेति स यदेव शोभनं तत्सोमोपनहनꣳ स्याद्वासो ह्यस्यैतद् भवति शोभनꣳ ह्येतस्य* व्वासः स यो हैनꣳ शोभनेनोपचरति शोभते हाथ य आह यदेव किञ्चेति यद्वैव किञ्च भवति तस्माद्यदेव शोभनं तत्सोमोपनहनꣳ स्याद्यदेव किञ्च सोमपर्य्याणहनम् ॥ ३ ॥

यदुष्णीषं व्विन्देत् । उष्णीषः स्याद् यदुष्णीषं न†

---

* 'ह्येतस्य'–इति ग, घ । † 'न'–इति ग, घ ।

पदार्थः। त्वं 'कार्षिः' कृषेर्देवतायाः, कर्षणस्य भक्षणस्य वा सम्बन्धी 'असि'। अतस्त्वां 'समुद्रस्य' समुन्दनरूपस्योदकस्य 'अक्षित्यै' अक्षीणतायै 'त्वा' त्वाम् 'अपनयामि' अपसारयामि[1]। उक्तस्याप-सारणस्य प्रयोजनं स्तौति माह— "यथा वा अङ्गारोऽग्निना प्सातः स्यादिति। 'प्सातः' भक्षितः, 'अग्निना' भक्षितः 'अङ्गारः' 'यथा' क्षरोपभावेन त्याज्यो भवति, 'एवम्' 'एषा आकृतिः' 'एतया' अद्देवतया 'प्साता भवति'। सोमहिंसापरिहारत्वेनापि परित्याज्य मित्याह— "राजानं वा एताभिरिति। 'मैत्रावरुणचमसे' 'याः' 'एताः' इदानीं गृह्यमाणा आपः सन्ति, 'एताभिः' अद्भिः 'उपस्रक्ष्यन्' अभिषवकाले सोमस्य संसर्गं करिष्यन् 'भवति', अत एव "आधवनीये समवनयति"-इति वक्ष्यते[2], आधवनीये समुपृष्टस्योदकस्य सोमरसेन संसृज्यमानत्वात्। "वज्रो वा आज्यम्"-इत्यादि, प्रागसकृद् व्याख्यातम्[3], "एत खलु वै देवा वज्रं कृत्वे"त्यादिप्रदर्शनेन[4] ॥ २६ ॥

समन्त्रकं मैत्रावरुणचमसेनोन्नयनं विधत्ते— "अथ गृह्णाति

१— 'अपनयामि' इत्येव मूलपाठः। 'गृह्णामि'-इति च तदर्थः पूर्वो मध्ये-परेण, सूत्रे विनियोगस्य तथाविध एव, तदनुपदं वक्ष्यति पैप्पलीयशाखा कण्डिकायां तथैव। नास्ति चैतन्मन्त्रस्येह व्याख्याने कश्चिदुपयोगः। कार्षिरसीत्येव श्लोको मन्त्र इह विनियुक्तः।

२— इहैव त्रिंशी कण्डिकायां द्रष्टव्यम् (५५९ पृ० १० पं०)।

३— १का० ७प्र० ३ब्रा० ७क० (१ भा० १९० पृ० ७ पं०)।

४— तै० सं० ६. २ ७. ११।

समुद्रस्य त्वेति[1]। यद्यत्र मैत्रावरुणचमसेनेति न श्रुतम्, तथापि "समुद्रस्य त्वेति तेन प्रस्तारि[2]"-इतिसूत्राद् गम्यते। अपां महात्मकत्वात् समुद्रस्य "आपो वै समुद्रः"-इत्येकदेशस्य प्रस्तुतात्मना स्तुतिः। 'एतत्' एतेन "समुद्रस्य त्वाचित्यै"-इतिपाठेन 'अप्सु एव' 'अचितिम्' अक्षय्यमक्षीणत्वं 'दधाति' स्थापितवान् भवति। 'तस्मात्' "अचित्यै"-इत्युक्तत्वात् 'एतावति भोगे भुज्यमाने' स्थावरजङ्गमात्मकजगत्पर्याप्तेऽपि भोगे सर्वैर्भुज्यमानेऽपि 'न चीयन्ते' क्षयं न प्राप्नुवन्ति, अक्षय्यं प्रवहन्त्येव। "तदन्वित्यादि। षोडशचमसोन्नयनानन्तरं मेकधनानां सुन्नयनम्[3], ततः पात्नेजनानां पत्न्या इति[4] ॥ २० ॥

यस्त्वितरेषां चमसेषु किं मैत्रावरुणचमसेनेत्यत आह— "तद्यन्मैत्रावरुणचमसेनेति। यस्माद् देवेभ्योऽपक्रान्तं यज्ञम्, एतेन मैत्रावरुणाख्येनर्त्विजा 'प्रैषैः' तत्प्रतिगमनसाधनैः आह्वानवाक्यैः 'प्रैषं' यज्ञस्य गमनम् 'ऐच्छन्'; 'निविद्भिः' निवेदनसाधनैः "अग्निर्देवेद्धः"-इत्यादिभिः[5] वाक्यैः 'न्यवेदयन्' परस्परं निवेदितवन्तः; 'पुरोरुग्भिः' 'पुरः' याज्यानुवाक्याभ्यां पुरस्तात् 'रुचिम्' इच्छां जनयन्ति देवताया इति पुरोरुचो "वायुरग्रेगाः"-

१— वा० सं० ६. २८. २।

२— का० श्रौ० सू० ९ ७.६। 'तेन मैत्रावरुणचमसेन'-इति तत्र वृत्तिः।

३— का० श्रौ० सू० ९. ७. १०।

४— "पात्नेजनाद्य पत्न्यो द्वौ-द्वौ"-इति का० श्रौ० सू० ९. ७. ११।

५— निविद १-१७ पदानि, ऐ० ब्रा० ३. ५. ७ प्रपञ्च विहितानि।

इत्याद्या.[1], ताभिः 'प्रारोचयन्' प्ररोचना मजनयन्। अतो मैत्रावरुणस्य प्रैषादिसाधनत्वात् तदीयश्चमसः प्रशस्त इत्यर्थः। "तस्मात् मैत्रावरुणचमसेन गृह्णातीति ॥ २८ ॥

अपसरणानन्तरं अनुष्ठेयं विधत्ते— "त आयन्तीति। पुन-र्देवयजनं प्रति आगच्छेयुः। 'अग्नीत्' च निर्गमनकाले समीपित-प्रकारेण 'चात्वाले' 'वसतीवरीभि' अद्भि' 'होतृचमसेन च' युक्तः सन् प्रत्युपस्थानं कुर्यात्। यदुक्तं सूत्रकृता— "प्रत्येत्य चात्वालस्यो-परि मैत्रावरुणचमसं वसतीवरीश्च प्रसर्पयति समाप इति, इत-रस्मिन् व्याख्याने, मैत्रावरुणचमसे प्रथम मिति[2], तदिदं सर्वं विधत्ते— "स उपर्युपरि चात्वालं सर्पयति, वसतीवरीश्च मैत्रा-वरुणचमसश्चेति। स्पष्टम् ॥

तत्र मन्त्रमाह— 'समापो अद्भिरिति[3]। 'आप' मैत्रावरुण-चमसगताः, 'अद्भिः' होतृचमसस्थाभिर्वसतीवरीभिः 'समग्मत' सङ्गता अभवन्। तथा 'ओषधीः' ओषध्यः, वर्द्धनीया, व्रीह्यादि-रूपा, 'ओषधीभि' व्रीह्यादिरूपाभि 'समग्मत'[4]। यद्वा, उभयत्र

१— पुरोरुच १-७ ऋच, वा० सं० १७. ३१-२७, ऐ० ब्रा० १ १ ८ नामोल्लेखमात्रेण विहिता।

२— का० श्रौ० सू० ९ ३ १२, १३, १४।

३— वा० सं० ६. २८ २।

४— "'ओषधी' ओषधयो मुद्गमसूरादिका, 'ओषधीभि' व्रीहियवादिभिः 'समग्मत' सङ्गच्छन्ताम्, यथा कारणभूतत्वात् ओषधीनामपि योगोऽस्तु"—इति महीधरः।

श्रोषधिशब्देन प्रकृता मैत्रावरुणचोदचमसगता श्रापो विवक्ष्यन्ते।
"यच्चामौ पूर्वेद्युरित्यादि, स्पष्टम् ॥ १८ ॥

अत्र केषाञ्चित् शाखात् उदकसमर्जनपक्ष मुदाहृत्य तदभि-प्राय मथाविष्कृत्य तस्यान्यथासिद्धिलप्रदर्शनेन निराचष्टे— "तद्धैक इति। 'एवं नयन्ति'-इति सम्बन्ध, श्रानयन्त्येवेत्यर्थ । 'श्रा मैत्रा वरुणचमसाद् वसतीवरीषु' उपसर्गवशात् नयन्तीत्यनुपज्यते। एवं कुर्वता पूर्वेद्युराहृतस्य वस्तरमस्य, श्रद्याहृतस्य च ससर्ग एवो-ऽपेक्षित, स उपरिष्टात् श्राधवनीये समवनयनाद् भविष्यति, श्रत 'तत् तथा न कुर्यात्' इति ॥

यदुक्तं "होतृचमसे वसतीवरी कृत्वा यजमानाय प्रयच्छति निग्राभ्या इति, तदेतदाह— "श्रथ होतृचमस इति। श्राग्नीध्र-हस्तस्थ होतृचमस मध्वर्युरादाय पूर्वेद्युराहृता 'वसतीवरी' श्रध्वर्यु 'गृह्णाति'। कस्मै उपयोगाय? 'निग्राभ्याभ्य', होतृचमसे निगृह्य-माणत्वात् "निग्राभ्या"-इति सञ्ज्ञा, निग्राभ्यास्थावयति, निग्राभ्यास्थ मभिच्छति, इत्येवमर्थाय ॥

पूर्वं यदुक्त "यच्चामौ पूर्वेद्युरित्यादि, समर्स्य चात्वालोपरि-भावित्वम्, तत् प्रदर्शति— "तद्दुपर्युपरि चात्वाल मिति। 'श्रत'

---

अस्मात् चात्वालोपरिप्रदेशात् 'देवा दिव मुपोदक्रामन्', 'तत्' तस्मात् कारणात् 'एतत्' एतेन चात्वालोपरिसर्पणेन 'यजमानम्' अथ स्वर्गस्य पन्था इति 'पन्थानम्' 'अनुसङ्ख्यापयति' अनुक्रमेण सङ्ख्यापयति, सम्यक् प्रख्यापयतीति यावत् ॥ २० ॥

"न आपन्नोति। अथाध्वर्यु मुद्दिश्याब्विषय होतुः प्रश्न मव-तारयति— "स होता पृच्छत्यध्वर्योऽवेरपा ३ इति। 'तम्' अध्वर्युं होता 'पृच्छति'; हे 'अध्वर्यो!' 'अप' उदकानि 'अवेः' लब्ध-वानसि। प्लुतिः प्रश्नार्थे[1]। "अवे"-इत्यस्य 'अविदः' इत्यर्थ इति व्याचष्टे— "अविदोऽपा ३ इत्येवैतदाहेति ॥

अथाध्वर्योर्होतारं प्रति प्रतिवचन माह— "तं प्रत्याहोतेव नमसुरितीति[2]। वय मिदानीं न केवलं मयो लब्धार एव, अपि च 'नमसुः' अत्यर्थं मानता अभवन्। प्रतिवचनस्य तात्पर्यं माह— "अविद मपो मेऽनंसतेत्येवैतदाहेति। 'अविदम्' अपो लब्धवानस्मि 'अपो' अपि च 'मे' आपः 'अनमत' आनता आगता अभूवन् 'इत्येव' 'एतत्' उत्तररूपं वाक्यम् 'आह' ॥ २१ ॥

यदुक्तं सूत्रकृता— "प्रचरणीमन्व मग्निष्टोमे जुहोत्यभावे चतु-र्गृहीतं च मम इति, उत्तरे प्रथम परिधि मालभते, प्रविशत्यश्चा-न्यत्र"-इति[3], तदेतत् क्रमेण दर्शयन्नादावग्निष्टोम माह— "स

---

१— पा० सू० ८.२.१००।
२— "होता एव"-इत्यादि का० श्रौ० सू० ८.३.१५।
३— का० श्रौ० सू० ८.३.१६, १७, १८।

यद्यग्निष्टोम स्यादिति। 'स' वर्त्तमान क्रतुरग्निष्टोमसंस्थश्चेत् 'अप-रस्या' च 'समव' अवशिष्ट' 'होमाय' 'अलम्' पर्याप्त 'स्यात्', तदा 'तम्' एव 'जुहुयात्', नो चेत् पुनश्च 'चतुर्गृहीत माज्य' 'गृहीत्वा' "य मग्ने पृत्सु"-इति¹मन्त्रेण जुहुयात् ॥

मन्त्रस्याय मर्थः ।— हे 'अग्ने।' 'यम्' 'मर्त्यं' मनुष्य 'पृत्सु' सङ्ग्रामेषु 'अवा' रक्षसि, तथा 'वाजेषु' अन्नेषु निमित्तभूतेषु 'यम्' मर्त्यं 'जुना' जवतिर्गत्यर्थः प्राप्तवानसि, 'स' उभयविषयो जन 'शश्वती' शाश्वती 'इष' अन्नानि 'यन्ता' प्राप्तवान् भवति। 'स्वाहा' सुहुत मस्तु ॥

मन्त्रस्याग्नेयत्व प्रकृते ज्योतिष्टोमकर्मणि सङ्गत मिति व्याचष्टे— "आग्नेय्या जुहोतीति। "अग्निर्वा अग्निष्टोम इति। यज्ञायज्ञीय-स्याग्निमस्तोत्रस्याग्निदेवताकत्वात्² अग्निष्टोमोऽग्नि, ततोऽग्न्यात्मक मग्निष्टोम माग्नेय्या होमेन 'अग्नौ' एव प्रतिष्ठापितवान् भवति। मन्त्रे यत् मर्त्तलिङ्गकत्वम्, तत् प्रशंसति— "मर्त्तवत्या, पुरुषसम्मितो वा अग्निष्टोम इति। 'द्वौ स्तोमौ प्रातस्सवन वहतो यथा प्राणश्चा पानश्च'-इत्युपक्रम्य तैत्तिरीयके "पुरुषसम्मितो वा एष यज्ञ इति³श्रुतत्वात् पुरुषसम्मितत्व मस्य यत, अत एवैतया मर्त्तवत्या

---

१— वा॰ सं॰ ६ ७८ १।

२— ता॰ ब्रा॰ ६ अ॰ १ ख॰—८ अ॰ ७ ख॰ पर्यन्त द्रष्टव्यम्। तथैतदन्त्य-खण्डस्य विशेषतो द्रष्टव्यः ।

३— तै॰ सं॰ ७ १ १ द्रष्टव्यम्।

होमो युक्त इत्यर्थं । निगमति— 'एव जुहुयाद् यद्यग्निष्टोम स्यादिति ॥ १२ ॥

'यद्युक्थ्य स्यान्मध्यम परिधि मुपस्पृशेदिति[1]। अग्नि परितो निधीयमाना परिधय । प्राच्या दिशि सूर्यस्येव परिधिलात् ते त्रय एव। 'उक्थानि अग्निष्टोमादुपरि उक्थसंस्थे कर्तौ स्तोतव्यानि 'त्रीणि उक्थस्तोत्राणि। अस्तु विलम्ब कि तत इत्याह— 'एतेह हि तर्हीति। यत 'एते' उक्थे यत्र 'प्रतितिष्ठति', अतस्त्रिषु परिधिषु 'मध्यम परिधि पश्चाद्गिमत प्रस्तरणा उपस्पृशेत् ।

अतिरात्रषोडशिनोस्तु कथ मित्यत आह— 'यदि अतिरात्रो वा षोडशी वा स्यादिति[2]। तत्रोभयत्र होम मुपस्पर्शन च न कुर्यात् किन्तु यजुरेव य अग्ने घृतु इति मन्त्र मुच्चैव 'तूष्णी मेत्य' देवयजन प्रपद्येत । 'तत्' तथा सति क्वचित् होम, क्वचित् परिधिस्पर्श क्वचित् तूष्णी मिति यथायथ पृथक्प्रकारेण 'यज्ञक्रतून् अग्निष्टोमादिकान् व्यावर्त्तयति परस्पर-व्यावृत्तान् करोति ॥

तथाच तैत्तिरीयकम्— यद्यग्निष्टोमो जुहोति यद्युक्थ्य परिधौ निर्मार्ष्टि यद्यतिरात्रो यजुर्वदन् प्रपद्यते यज्ञक्रतूना व्यावृत्त्यै -इति[3]। कात्यायनस्तु अतिरात्रषोडशिनौ प्रति विकल्प

---

१— 'उक्थ्ये प्रथम परिधि मालभते -इति (श्रौ० ६ १ १७) विचार्यम् ।
२— "प्रविशत्येवान्यत्र -इति का० श्रौ० सू० ६ १ १८ ।
३— तै० स० ६ ४ ४ १४ ।

यद्यग्निष्टोमः स्यादिति। 'सः' वर्त्तमानः क्रतुरग्निष्टोमसंस्थश्चेत् 'प्रच-रण्यां' यः 'संस्रवः' अवशिष्टः 'होमाय' 'अलम्' पर्याप्तः 'स्यात्', तदा 'तम्' एव 'जुहुयात्'; नो चेत् पुनश्च 'चतुर्गृहीतम् आज्यं' 'गृहीत्वा' "य मग्ने पृत्सु"-इति¹मन्त्रेण जुहुयात् ॥

मन्त्रस्याय मर्थः।— हे 'अग्ने!' 'यम्' 'मर्त्यं' मनुष्यं 'पृत्सु' सङ्ग्रामेषु 'अवाः' रक्षसि, तथा 'वाजेषु' अन्नेषु निमित्तभूतेषु 'यम्' मर्त्यं 'जुनाः' जवतिर्गत्यर्थः प्राप्तवानसि, 'सः' उभयविषयो जनः 'शश्वतीः' शाश्वतीः 'इषः' अन्नानि 'यन्ता' प्राप्तवान् भवति; 'स्वाहा' सुहुत मस्तु ॥

मन्त्रस्याग्नेयत्वं प्रकृते ज्योतिष्टोमकर्मणि सङ्गत मिति व्याचष्टे— "आग्नेय्या जुहोतीति। "अग्निर्वा अग्निष्टोम इति। यज्ञायज्ञीय-स्यान्तिमस्तोत्रस्याग्निदेवताकत्वात्² अग्निष्टोमोऽग्निः; ततोऽग्न्यात्मक मग्निष्टोम माग्नेय्या होमेन 'अग्नौ' एव प्रतिष्ठापितवान् भवति। मन्त्रे यत् मर्त्तलिङ्गकत्वम्, तत् प्रशंसति— "मर्त्तवत्या; पुरुषसम्मितो वा अग्निष्टोम इति। "द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चा-पानश्च"-इत्युपक्रम्य तैत्तिरीयके "पुरुषसम्मितो वा एष यज्ञ इति"³श्रुतत्वात् पुरुषसम्मितत्व मस्य यतः, अत एवैतया मर्त्तवत्या

---

१— वा॰ सं॰ ९. २९. १।

२— ता॰ ब्रा॰ ६ अ॰ १ ख॰—८अ॰ ७ख॰ पर्यन्त द्रष्टव्यम्। तत्रैतस्मद्-खण्डस्तु विशेषतो द्रष्टव्यः।

३— तै॰ सं॰ ७. १. १. १ द्रष्टव्यम्।

होमो युक्त इत्यर्थः। निगमति— "एवं जुहुयाद् यद्यग्निष्टोमः स्यादिति ॥ २२ ॥

"यद्युक्थ्यः स्यान्मध्यमं परिधि मुपस्पृशेदिति[1]। अग्नेः परितो निधीयमानाः परिधयः। प्राच्यां दिशि सूर्यस्यैव परिधित्वात् ते त्रय एव। 'उक्थानि' अग्निष्टोमादुपरि उक्थ्यसंस्थे क्रतौ स्तोतव्यानि 'त्रीणि' उक्थस्तोत्राणि। अस्तु नित्यम्, किं तत इत्याह— "एतैर्हि तर्हीति। यतः 'एतैः' उक्थैः यज्ञः 'प्रतितिष्ठति', अतस्त्रिषु परिधिषु 'मध्यम परिधि' पश्चाद्दिग्गतं प्रचरण्या 'उपस्पृशेत्' ॥

अतिरात्रषोडशिनोस्तु कथ मित्यत आह— "यदु अतिरात्रो वा षोडशी वा स्यादिति[2]। तत्रोभयत्र होम मुपस्पर्शनं च न कुर्यात्, किन्तु 'प्रसुप्तैव' "य मग्ने प्रस्तु"-इति मन्त्र मुक्त्वैव 'तूष्णीं सेत्य' देवयजन 'प्रपद्येत'। 'तत्' तथा सति क्वचित् होमः, क्वचित् परिधिसंस्पर्शः, क्वचित् तूष्णीं मिति 'यथायथं' पृथक्प्रकारेण 'यज्ञक्रतून्' अग्निष्टोमादिकान् 'व्यावर्तयति' परस्पर-व्यावृत्तान् करोति ॥

तथाच तैत्तिरीयकम्— "यद्यग्निष्टोमो जुहोति यद्युक्थ्य परिधौ निमार्ष्टि, यद्यतिरात्रो यजुर्वदन् प्रपद्यते यज्ञक्रतूनां व्यावृत्त्यै"-इति[3]। कात्यायनस्तु अतिरात्रषोडशिनौ प्रति विकल्प

1— "उक्थ्ये मध्यमं परिधि मालभेत"-इति (कौ० ८. ९. १०) [illegible]
2— "अतिरात्रेऽप्येवम्"-इति का० श्रौ० सू० ८. ३ १८
3— तै० सं० ६. ३. १. [illegible]

मुक्तवान्— "रराव्यायामप्ता वा योऽग्निनि, छदिरतिरात्रे"- इति[1] ॥ २२ ॥

इदानीं मेकधननामघटाना मयुग्मसङ्ख्याविकल्प माह— "अयुक्ता अयुक्ता एकधना भवन्तीति। वक्ष्यमाण त्रिपञ्चादिपञ्चदशान्ताभिप्रायेण वीप्सा। 'अयुक्ता' त्रि-पञ्चादय । तानेवायुग्मविकल्पानुदाहरति— "त्रयो वा पञ्च वेत्यादिना। त्रयो वा पञ्च वेत्येको ऽयुग्मविकल्प, पञ्च वा सप्त वेत्यपर। एव मुत्तरेष्वपि द्रष्टव्यम्। तथा चासादनप्रस्तावे कात्यायन— "प्रत्यगेकधनानयुग्मानुदहरणात्त्रिप्रभृत्या पञ्चदशभ्य" इति[2] ॥

अथ युग्मसङ्ख्या एकधनशब्दनिर्वचन प्रदर्शयन् प्रशसति— "द्वन्द्व मद मिथुन प्रजनन मथ य एप एकोऽतिरिच्यत इत्यादिना। एपु विकल्पेषु मध्ये यदि त्रयस्तदा द्वावेक द्वन्द्व स्तृतीयोऽतिरिच्यते, यदि पञ्च, तदा द्वे द्वन्द्वे पञ्चमोऽतिरिच्यते। एव सप्त-नवैकादश त्रयोदश पञ्चदशस्वपि योज्यम्। तत्र यत् 'द्वन्द्व' तत् 'मिथुनम्', तच्च यजमानस्य पुत्रपौत्रादिप्रजननसरूपम्, 'य एपोऽतिरिच्यते' तृतीयादिक, 'स' सर्वोऽपि 'यजमानस्य' 'श्रियम्' 'अभि'लक्ष्य 'अतिरिच्यते'। 'स वै' सोऽतिरिक्त 'एषां' विकल्पितानां युग्मानां 'सधनम्' समान मेक मेव धनम्, तदन्तपातित्वात्। यस्मादेषां सधन मासीत् अतिरिक्त, 'तस्मात्'

---

१— का० श्रौ० सू० ८ ३ १८, २०।
२— का० श्रौ० सू० ८ २ २१।

अयुग्मसङ्ख्याका उदकविशेषा[1] एकधननामकाः सम्पन्नाः। अत एकधनात्मकत्वात् अयुग्मसङ्ख्याका एकधनाः प्रशस्ता इति[2] स्तुतिः ॥ २४ ॥ ४ [८. ३.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमाध्याये तृतीयं ब्राह्मणम् ॥

---

(अथ चतुर्थं ब्राह्मणम्.)

अथाधिषवणे पर्युपविशन्ति। अथास्याᳬ हिरण्यं बध्नीते द्वयं वा इदं न तृतीय मस्ति सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्यᳬ सत्येनाᳬशूनुपस्पृशानि सत्येन सोमं पुराहणानीति तस्माद्वा अस्याᳬ हिरण्यं बध्नीते* ॥ १ ॥

---

१— तावत्याससङ्ख्यायादुदहरण्या कलशाश्चैकधनशब्दप्रतिपाद्या भवन्ति।

२— तथाच अग्निष्टोमे त्रय पञ्च वा, उक्थ्येऽग्निष्टोमेऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोडशिनि सप्त वा नव वा, वाजपेये नव वैकादश वा, अतिरात्रे एकादश वा त्रयोदश वा, अप्तोर्यामे त्रयोदश वा पञ्चदश वेति एकधनाख्या उदहरण्या कलशा भवन्तीति।

* 'बध्नीते'—इति ग, घ।

अथ ग्रावाण मादत्ते। ते वा ऽएतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैन मेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा ऽएन मेतद्यदभिषुण्वन्ति त मेतेन घ्नन्ति तद्यात उदेति तथा सञ्जीवति तस्मादश्ममया ग्रावाणो भवन्ति ॥ २ ॥

त मादत्ते। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मादद्दे रावासीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैन मेतदा दत्तेऽश्विनो-र्बाहुभ्या मित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्या मादत्ते न स्वाभ्यां पूष्णो हस्ताभ्या मिति पूषा भागदुघस्तस्यैव हस्ताभ्या मादत्ते न स्वाभ्यां वज्रो वा ऽएष तस्य न मनुष्यो भर्त्ता त मेताभिर्देवताभिरादत्ते ॥ ३ ॥

आददे रावासीति। यदा वा ऽएन मेतेनाभिषुण्व न्त्यथाहुतिर्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्ये तद्येषु वयः रासत ऽआहुतीश्च दक्षिणाश्च तस्मादाह रावासीति ॥ ४ ॥

गभीर मिम मध्वरं कृधीति। अध्वरो वै यज्ञो महान्त मिमं यज्ञं कृधीत्येवैतदाहेन्द्राय सुषूतम मितीन्द्रो

वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतम मिति सुसुततम* मित्येवैतदाहोत्तमेन पविनेत्येष वा ऽउत्तमः पवियत्सोमस्तस्मादाहोत्तमेन पविनेत्यूर्ज्जस्वन्तं मधुमन्तं पयस्वन्त मिति रसवन्त मित्येवैतदाह यदाहोर्ज्जस्वन्तं मधुमन्तं पयस्वन्त मितिं† ॥ ५ ॥

अथ व्वाचं यच्छति । देवा ह वै यज्ञं तन्वानास्ते ऽसुररक्षसेभ्य आसङ्गादिभयाञ्चक्रुस्ते होचुरुपाꣳशु यजाम व्वाचं यच्छामेति त ऽउपाꣳश्वयजन् वाच मयच्छन् ॥ ६ ॥

अथ निग्राभ्या आहरति । तास्वेनं व्वाचयति निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे तर्पयत व्वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्निति रसो वा ऽआपस्ताखेवैता माशिष माशास्ते सर्वञ्च म ऽआत्मानं तर्पयत‡ प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा व्वितृषन्निति स य एष उपाꣳशुसवनः स व्विवस्वानादित्यो निदानेन सोऽस्यैष व्यानः§ ॥ ७ ॥

---

* 'सुसुतम'–इति ग, घ।
† 'मिति'–इति ख, 'मिति'–इति ग, घ।
‡ 'तर्पयत'–इति ग, घ।
§ 'म'–इति ग, घ।

तु मभिमिमीते। घ्नन्ति वा ऽएन मेतद्यदभिषुण्वन्ति तु मेतेन घ्नन्ति तद्यात उदेति तथा सञ्जीवति यदेव मिमीते तस्मान्मात्रा मनुष्येषु मात्रो यो चाप्यन्या मात्रा ॥ ८ ॥

स मिमीते। इन्द्राय त्वा व्वसुमते रुद्रवत ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति व्वसुमते रुद्रवत इति तदिन्द्र मेवान्व व्वसूश्च रुद्रांश्चाभजतीन्द्राय त्वादित्यवत ऽइति तदिन्द्र मेवान्वादित्यानाभजतीन्द्राय त्वाभिमातिघ्न ऽइति सपत्नो वा* ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एव मस्यैष ऽऋते देवेभ्यः ॥ ९ ॥

श्येनाय त्वा सोमभृत ऽइति। गायत्र्यै मिमीतेऽग्नये त्वा रायस्पोषद ऽइत्यग्निर्वै गायत्री गायत्र्यै मिमीते स यद्गायत्री श्येनो भूत्वा दिवः सोम माहरत्तेन सा श्येनः सोमभृत् तेनैवास्या एतद्वीर्येण द्वितीयः मिमीते† ॥ १० ॥

अथ यत् पञ्च कृत्वो मिमीते। संव्वत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संव्वत्सरस्य तं पञ्चभिराप्नोति तस्मात् पञ्च‡ कृत्वो मिमीते ॥ ११ ॥

---

* 'वा'-इति ग, घ। † 'मिमीते'-इति क।

‡, § 'सप्त'-इति ख।

त मभिमृशति । यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोच ऽइति यत्र वा ऽएषोऽग्रे देवानाꣳ हविर्बभूव तदीक्षाञ्चक्रे मैव सर्व्वेणैवात्मना देवानाꣳ हविर्भूवमिति स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त ॥ १२ ॥

तद्वै देवा अस्पृण्वत* । तेऽस्यैतेनैवैतास्तनूराप्नुवन्त्स कृत्स्न एव देवानाꣳ हविरभवत्तथो ऽएवास्यैष एतेनै†वैतास्तनूराप्नोति स कृत्स्न एव देवानाꣳ हविर्भवति तस्मादेव मभिमृशति ॥ १३ ॥

अथ निग्राभ्याभिरुपसृजति । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किञ्चन प्रतिधारयते‡ ता ह स्व मेव व्यशश्वेरुः कस्मै नु वयं तिष्ठेमहि याभिरस्माभिर्वृत्रो हत इति सर्व्वं वा ऽइद मिन्द्राय तस्थान मास यदिदं किञ्चापि योऽयं पवते ॥ १४ ॥

स इन्द्रोऽब्रवीत् । सर्व्वं वै म ऽइदं तस्थानं यदिदं किञ्च तिष्ठध्व मेव म ऽइति ता होचुः किं नस्ततः स्यादिति

---

* 'त'-इति ग, घ ।  † 'एतेनै'-इति ग, घ ।

‡ 'प्रतिधारयन्ति'-इति ग, घ । 'प्रतिधारयते'-इति सा॰-सम्मतम् ।

वन्निति तदेन माभिर्द्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पर्शयत्यम्ब निष्पर समरीविदा मिति योषा वा ऽअम्बा योषा दिशस्तस्मादाहाम्ब निष्परेति समरीविदा मिति प्रजा वा ऽअरीः सम्प्रजा जानता मित्येवैतदाह तस्माद्या अपि विदूर मिव प्रजा भवन्ति स मेव ता जानते तस्मादाह समरीव्विदा मिति* ॥ २१ ॥

अथ यस्मात्सोमो नाम । यत्र वा ऽएषोऽग्रे देवानाꣳ हविर्बभूव तद्धेक्षाञ्चक्रे मैव सर्व्वेणैवात्मना देवानाꣳ हविर्भूव मिति तस्य या जुष्टतमा तनूरास ता मप-निदधे तद्वै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न एतया हविरेधीति तां दूर ऽइवोपप्रावृहत स्वा वै म ऽएषेति तस्मात्सोमो नाम† ॥ २२ ॥

अथ यस्माद्यज्ञो नाम । घ्नन्ति वा ऽएन मेतद्यदभि-षुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यन् जायते तस्माद्यञ्जो यज्जो‡ ह वै नामै तद्यद्यज्ञ इति ॥ २३ ॥

---

* 'मिति'–इति ख, मिति'–इति ग, घ ।

† 'नाम –इति ख नाम'–इति ग, घ ।

‡ 'य जायते तस्माद्यञ्जो यज्जो'–इति क, ख, डा॰ वबरेण चैवम् दृष्ट ।

तुचैता मुपि ब्वाच मुवाद । त्वं मङ्ग मुश्रश्ंसिषो देवः शविष्ठ मर्त्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते व्चच इति मर्त्त्यो हैवैतद् भुवन्नुवाच* त्व मेवैतो जनयितासि नान्यस्त्वदिति† ॥ २४ ॥

अथ निग्राभ्याभ्यो गृहान्विगृह्णते । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्य्येणापः स्यन्दन्ते स्यन्दमानानां वै व्यसतीवरीर्गृह्णाति व्यसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो गृहान्विगृह्णते तेनैवैतद्वीर्य्येण गृहान्विगृह्णते होतृचमसाद् योषा वा ऽऋग्घोता योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेन मेतस्यै योषाया ऽऋचो होतुः प्रजनयति तस्मा-द्धोतृचमसात् ॥ २५ ॥ ५ ॥

॥ इति सप्तमप्रपाठके पञ्चमं ब्राह्मणम् [९. ४.] ॥

इत्थ मभिषवसाधनाना मपां ग्रहण मभिधाय, अथ सोमा-भिषवप्रयोगं वक्तु मुपक्रमते— "अथाधिषवणे पर्युपविशन्तीति[1] । 'अधि' उपरि सूयेते इत्यधिषवणे दारुमये फलके, तयोरुपरि ते 'उपविशन्ति' । उपवेशनप्रकारः सूत्रे दर्शितः— उत्तरौ तावध्वर्यु-

* 'भुवन्नुवाच'–इति सा०-सम्मतः पाठ इति डा० वेबरः ।

† 'दितु'–इति ख, 'दिति'–इति ग, घ ।

१— एतदेवोक्तं कात्यायनेन, श्रौ० सू० ९. ४. १ द्रष्टव्यम् ।

यन्त्यॄति तदेन माभिर्द्दिग्भिर्मिथुनेन प्रियेण धाम्ना सुᳫसार्गयत्यन्व निष्पर सुमरौविंदा मिति योषा वा ऽअन्वा योषा दिशस्तस्मादाहान्व निष्परेति सुमरौविंदा मिति प्रजा वा ऽअरीः सुप्रजा जानता मित्येवैतदाह तस्माद्या अपि विदूर मिव प्रजा भवन्ति स मेव ता जानते तस्मादाह सुमरौव्विंदा मिति* ॥ २१ ॥

अथ यस्मात्सोमो नाम। यत्र वा ऽएषोऽग्रे देवानाᳫ हविर्बभूव तज्जेष्ठाञ्चक्रे मैव सर्व्वेणैवात्मना देवानाᳫ हविर्भूव मिति तस्य या जुष्टतमा तनूरास ता मप-निदधे तद्वै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न एतया हविरेधीति तां दूर ऽइवोपप्रावृहत स्वा वै म ऽएषेति तस्मात्सोमो नाम† ॥ २२ ॥

अथ यस्माद्यज्ञो नाम। घ्नन्ति वा ऽएन मेतद्यदभि-षुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यन् जायते तस्माद्यज्ञो यज्ञो‡ ह वै नामै-तद्यद्यज्ञ इति ॥ २३ ॥

---

* 'मितु'—इति ख, 'मिलि'—इति ग, घ।

† 'नामु'—इति ख, 'नाम'—इति ग, घ।

‡ 'यं जायते तस्माद्यंज्ञो यंज्ञो'—इति क, ख; डा०-वेबरेण पैवाय दृष्टः।

तद्वैता मपि व्वाच मुवाद। त्वं मङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्त्यम्। न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते व्वच इति मर्त्त्यो हैवैतद् भवन्नुवाच* त्व मेवैतो जनयितासि नान्यस्त्वदितिं† ॥ २४ ॥

अथ निग्राभ्याभ्यो ग्रहान्विगृह्णाते। आपो ह वै व्वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते स्यन्दमानानां वै व्वसतीवरीर्गृह्णाति व्वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो ग्रहान्विगृह्णाते तेनैवैतद्वीर्येण ग्रहान्विगृह्णाते होतृचमसाद् योषा वा ऽऋग्घोता योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेन मेतस्यै योषाया ऽऋचो होतुः प्रजनयति तस्माद्धोतृचमसात् ॥ २५ ॥ ५ ॥

॥ इति सप्तमप्रपाठके पञ्चमं ब्राह्मणम् [६. ४.] ॥

इत्थ मभिषवसाधनाना मपां ग्रहण मभिधाय, अथ सोमाभिषवप्रयोग वक्तु मुपक्रमते— "अथाधिषवणे पर्युपविशन्तीति"[1]। 'अधि' उपरि सूयेते इत्यधिषवणे दारुमये फलके, तयोरुपरि ते 'उपविशन्ति'। उपवेशनप्रकारः सूत्रे दर्शितः— उत्तरौ तावध्वर्यु-

---

* 'भुवनमुवाच'–इति सा॰-सम्मतः पाठ इति डा॰ वेबर।

† 'दितिं'–इति ख, 'दिति'–इति ग, घ।

१— एतदेवोक्तं कात्यायनेन, श्रौ॰ सू॰ ९. ४. १ द्रष्टव्यम्।

यजमानौ, पूर्वोऽध्वर्युः, अपरेण परीत्येतरे' इत्य 'देवस्य त्वा-दिना'[1]। 'इतरे' अध्वर्युपुरुषा इत्यर्थः। हिरण्यबन्धनं विधाय, तत् सत्यरूपत्वेन प्रशंसति— "अथाप्स्या हिरण्यं बध्नीते इत्य वा इदं म तृतीय सवनीयादिना। 'अप्स्याम्' अनामिकाङ्गुल्या मित्यर्थः। इय वेत्यादि प्रागस्मद् व्याख्यातम्[2]। अमेतत् हिरण्यमेत्य श्रूयते— "आपो वरुणस्य पत्नय आसन् ता अग्निरभ्यध्यायत् ता समभवत् तस्य रेत परापतत् तद्धिरण्य मभवदिति[3]। अध्वर्यो मनुष्यत्वेनानृतरूपत्वात् सत्यभूतस्याग्नेरेतस्य हिरण्यस्याभिषव-समये स्पर्शेनानृतबाधात् 'सत्येन' 'अंशून्' सोमांशून् 'उपस्पृशानि', 'सत्येन' 'सोमम्' 'पराहणानि' अभिषुणोमीत्यभिप्रायेण हिरण्य बध्नीयात् ॥ १ ॥

"अथेति। 'अथ' अंशुग्रहाभिषवार्थम् 'अध्वर्युः ग्रावाणमादत्ते'[4]। अभिषवसाधनस्य ग्राव्णोऽश्ममयत्वं विधाय प्रशंसति— 'ते वा एत इति। सोमस्य देवत्वसमर्थनाय 'दिवि वा' इति। 'हि'-शब्दः "तृतीयस्या मितो दिवि सोम आसीत्" -इत्यादि[5]श्रुत्यन्तरप्रसि-द्ध्यर्थः। तस्य द्युस्थस्य सोमस्य इहत्वप्रकारः प्राग् वर्णितः[6]। तस्य द्रवीभूतस्य सोमस्य 'शरीरं' परिदृश्यमाना 'गिरयः', तदवयवा

---

१— का० श्रौ० सू० ६ ४ २, ३, ४ ५।
२— १ १ १ ४, ५ २ २२ (१ भा० ६ ४१८ पृ०)।
३— तै० सं० ५ ५, ४ १। ४— का० श्रौ० सू० ९ २ ५ क।
५— तै० सं० ३ ५ ७ २ (६ भा० २१६ पृ०)।
६— ३ प्र० ४ब्रा० १६का० (२४४पृ० ५प०)।

'अश्मानः'। अतः 'एतत्' एतेन गाव्णा अश्ममयत्वकरणेन 'एनं' सोमं समृद्धं कृतवान् भवति। न हि स्वशरीरं स्वस्य बाधकं भवति, अतस्तेनाभिषवेनापि समृद्धिरेवेत्यर्थः। किञ्चापरावयविनौ विशिष्टाविदानीं सोमाभिषवव्याजेन सम्बन्धयन् सोमं 'कृत्स्नं' सकलं कृतवान् भवति। किञ्चाभिषवो नामास्य वधः, तं कुर्वन्तोऽप्येते अश्ममया ग्रावाणः तदवयवत्वात् 'न घ्नन्ति' न हिंसन्ति। 'अतः' 'अस्मात्' अभिषवस्थानात् सोमः 'उदेति' पुनरुदितो भवति। तथैव 'सञ्जीवति' च पुनः सम्यग् जीवोपेतो भवति। "तस्मादिति पुनरुपसंहारः॥ १॥

अथ तत्र मन्त्रं विधाय व्याचष्टे— "त्वा माददे देवस्य त्वेत्यादिना[1]। गतं सेवैतत्। "पूषा भागदुघ इति। "दुहेः कब् घश्च"—इति[2] कप् घकारश्च। किं कारणं सवित्राद्यभिधानम्? उच्यते— "वज्रो वा, एष इति। 'एष' ग्रावा प्रचेपशाधनत्वसाम्यात् सारवत्त्वाच्च 'वज्रः', 'अतः' 'तस्य' अस्य देव. 'भर्त्ता' स्वामी 'न मनुष्य', अत एव मत 'तं' ग्रावाणम् 'एताभि' सवित्रादिभिः 'देवताभिः' 'आदत्ते' अध्वर्युः[3]॥ २॥

"आददे रावासीति[4]। मन्त्रभागे ग्रावाणं सम्बोध्य त्वं रावासीति मन्त्रोऽभिधत्ते। तस्य तथात्वं कुत इत्याशङ्क्य परम्परया भविष्यतीत्युपपादयति— "यदा वा एनं सेतेनाभिषुण्वन्तीत्यादिना। अभिषवाभावे आज्यत्वसम्भवात्, आज्यत्वभावे दक्षिणाना मप्रसक्तेः

१— वा० सं० ६. ३०. १ क।　　२— पा० सू० ३. ३. ७०।
३— का० श्रौ० सू० ६. ९ ५ क।　　४— वा० सं० ६. ३०. १ ख।

'आक्रन्तोय दक्षिणाय' इति 'एतद्' इयम् 'एषः' ग्रावा 'रासते' ददाति। अतो रासत इति रावेति; रासतेर्दानार्थात्[1] रावशब्दो निष्पन्न इत्यभिप्रायेण मन्त्रो 'रावासीति आह' इत्यर्थः ॥ ४ ॥

गभीर मिम मध्वर मिति[2]। मन्त्रं व्याचष्टे— योऽयम् 'अध्वरः' सः 'यज्ञः' 'वै' एव, उभौ शब्दौ पर्यायावित्यर्थः। यदतिशुम्भितत्वेन महत्, तद् 'गभीरम्' इति लोके व्यवह्रियते; अतो गभीरे महत्त्वदर्शनात् 'इमम् अध्वरं महान्तं कृधि' 'इत्याह' मन्त्रः। सुपूतम मित्यत्र सुपुततम मिति वक्तव्ये तकारलोपो दीर्घश्छान्दस इत्यभिप्रायेण व्याचष्टे— "सुपूतम मिति सुपुततम मित्येवैतदाहेति। पवि-शब्दस्य वज्रादौ प्रसिद्धत्वात् अत्र सोमार्थ इति व्याचष्टे— "एष वा उत्तमः पविः, यत् सोम इति। पवतिर्गतिकर्मा[3]। पवति, दशापवित्रे स्रवतीति पविः सोमः। अथ वा पविवद् वज्ररूपत्वात् पविः सोमः। सोमः 'इति' यदस्ति, 'एषः' सोमः 'उत्तमः पविः' खलु; सोमपानेन प्रवृद्धस्येन्द्रस्य वृत्रादिवधश्रवणाद्। अत्र मधुररसानां वाचका ये ऊर्ज-मधु-पयः-शब्दाः, तेषां तात्पर्यतो रस एवार्थ इति व्याचष्टे— "ऊर्जस्वन्तं पयस्वन्त मित्यादिना। अत्रोर्जमधुपयसां रसविशेषरूपत्वात् सामान्यविशेषरूपादिति भावः। नैते माधुर्यार्थतया प्रसिद्धाः, अतः कथं त एवं सङ्गच्छन्त इत्याशङ्काया अपनोदनाय पुनर्निर्देशः कृतः— "यदाहोर्जस्वन्त मधुमन्तं पयस्वन्त मितीति ॥

---

१— निघण्टौ ३. २२ ५ द्रष्टव्यम्। २— वा० सं० ६. ३०. १ ग।
३— निघ० २. १४ १०८।

मन्त्रस्याय मर्थ ।— हे यावन् ! त्वं 'रावासि', अतस्त्वा 'सवितु देवस्य' अनुज्ञाया सत्याम् 'अश्विनोर्बाहुभ्या' 'पूष्णो हस्ताभ्याम्' 'आददे'। उक्तो बाहुस्तदिभाग । इमम् 'अध्वर' यज्ञ 'गभीर' महान्त 'इधि' कुरु । 'इन्द्राय' इन्द्रार्थं 'सुषूतम' सुष्ठभिषुत कुरु । 'उत्तमेन पविना' सोमेन युक्त चम मध्वरम् ऊर्जादिराश्रयभूत-रसोपेत कुर्विति ॥ ५ ॥

"अथ वाच यच्छतीति। वाग्यमनार्थवादो 'देवा ह वा इत्यादि, माग्व्याख्यात । वाग्यमनस्यावधि सूत्रे दर्शित — '(देवस्य त्वेत्यभि मादाय) वाच यच्छति प्राग्विद्धारात् –इति'[1] ॥ ६ ॥

यदुक्त सूत्रकृता— "निग्राभ्यास्य वाचयति उरसेना निरष्ठ निग्राभ्यास्थेति"[2]। तदिद माह— 'अथ निग्राभ्या आहरति तास्विन वाचयति निग्राभ्या स्थ देवश्रुत इत्यादिना। 'तासु आगतासु 'एन' यजमान 'निग्राभ्या स्थ' इत्यादि-मन्त्र[3] 'वाचयति' अध्वर्यु । हे आप ! देवश्रुत देवेषु प्रसिद्धा यतो यूय 'निग्राभ्या स्थ' इन्द्रेणोरसि गृहीतत्वात् । वक्ष्यति हि— "तद्देना उरसि न्यष्ट-मीत तस्मान्निग्राभ्या नाम' इति[4]। तादृशो यूय मा' मा 'तर्प-यत' प्रीणयत ॥

मन्त्रशेष मवयवशोऽभिधत्ते— "मनो म इत्यादिना[5]।

१— का० श्रौ० सू० ९ ४ १ ३।
२— का० श्रौ० सू० ९ ४ ७। ३ — वा० स० ६ ३० २।
४— अनुपद निर्देवादरिष्टात् पश्चन्यहा आगता द्रष्टव्यम् ( ५७८ पृ० )।
५— वा० स० ६ ३० १। पूर्वमन्त्रस्यैव शेषोऽयम् इति विनियोगानन्य स्फुट । संहितायान्तु भिन्न एवाय मन्त्र इति प्रतीयते।
"६

'आत्मानं' शरीरम्। 'प्रजां' पुत्रादिकाम्। 'गणान्' बन्धुभृत्यादीन्। युष्माभिस्तर्पिता अस्मदीयाः 'गणाः' 'मा विदघन्' विदृद्धतृष्णा मा भूवन्। आपः खल्व मेव तर्पणसाधन द्रव्यम्, तर्पयितव्यास्तु बहवः, अतस्तासां तादृशी शक्तिः कुत इत्याशङ्काया माह— "रसो वा आपस्तास्वेवैता माशिष माशास्त इति। अपां रसरूपत्वात् तास्वेवैतां तृप्तिरूपा माशिष माशास्ते; अतः सारवता आशासन युक्तम्। मन आदिकं सर्वं मपि सङ्ख्यानुवदति— "सर्वं च स इति। आत्मान मित्यादिर्विविच्यानुवादः॥

"उपांशुसवने सोमं मिमीते[1] इन्द्राय त्वा वसुमत इत्यादि[2]-सूत्रोक्त मर्थं दर्शयति— "स एष उपांशुसवन, स विवस्वानादित्यो निदानेन, सोऽस्यैव व्यान इति। उपांशुग्रहार्थः सोमोऽभिषूयते येन, स 'उपांशुसवन.' पाषाणः, 'सः' 'निदानेन' मूलकारणविचारेण विवस्वत्सञ्ज्ञक आदित्य एव; तस्यैवैतदात्मनावस्थानात्। 'स एष' 'अस्य' यज्ञस्य 'व्यानः'; प्राणापानरूपयोरुपांश्वन्तर्यामयोर्मध्ये स्थायत्वात्। "अथ यः प्राणापानयोः सन्धिः स व्यानः"-इति[3] श्रुतेरस्य व्यानत्वम्। उपांशुसवन इति वैदिकी सञ्ज्ञा, व्यवहारार्था, तदुपांशुसवनेन सिमयतीत्येवमर्था॥ ७॥

"त मभिमिमीत इति। 'तम्' उपांशुसवनम् 'अभि' तस्योपरि सोम 'मिमिते' क्रयकालीनमानेन सोम संस्कुर्यात्। "प्रत्नि

---

१— का० श्रौ० सू० ९. ४ ८। २— वा० सं० ६. ३२. १—५।
३— छा० उ० १ ३ ३।

वा इत्यादिरुपांशुसवनपरिमानार्थवादवद् व्याख्यायमानस्य ग्रावो-परिभावं प्रशंसेदानीं मानं प्रशंसति— "यद्वेव मिमीते तस्मा-न्मात्रा मनुष्येष्विति । 'उ'-शब्दोऽप्यर्थः । यापि मात्रा सोमे कृता, 'तस्मात्' सोमस्य मितत्वात् 'मनुष्येषु' व्यवहारार्थं प्रस्थ-कुडवाढक-द्रोणादिका 'मात्रा' सम्पन्ना । "यो चापि"-इत्यत्र उकारः प्रश्लेषः । 'अपि च' 'या उ' च 'अन्या मात्रा' एकद्वैत्यादिसङ्ख्यासंयुक्ता, सापि सोममानप्रयुक्तेत्यर्थः ॥ ८ ॥

सोमोन्माने मन्त्रं विधाय व्याचष्टे— "स मिमीत इन्द्राय त्वा वसुमत इत्यादिना[1] । इन्द्रस्य विशेष्यतया निर्दिशस्य वसुरुद्राणां तद्विशेषणतया निर्देशस्य च प्रयोजनमाह— "इन्द्रो वै यज्ञस्य देवतेत्यादिना । 'यज्ञस्य' सोमयागस्य 'इन्द्रो देवता'; "प्रातःसुत सापिबो हर्यश्च माध्यन्दिनं सवनं केवलं ते । मरुद्भिः पिबस्व रत्न-धेभिः"-इत्यादिमन्त्रात्[2] सवनत्रयेऽपि इन्द्रस्य प्राधान्यात् "इन्द्रो वै यज्ञस्य देवता"-इत्युक्तम् । 'वसुमते रुद्रवते' इत्यादौ वस्वादेरिन्द्र-शेषत्वप्रतीतेः इन्द्रप्रधानभूतं मुख्यं भागिनं कृत्वा वस्वादीनपि 'अन्वाभजति' पश्चाद्भागिनः करोति, इन्द्रस्यानुचरान् कृतवान् भवतीति यावत् । "इन्द्राय त्वाभिमातिघ्ने"-इत्यत्राभिमातिशब्दः सपत्नमभिधत्त इत्याह— "सपत्नो वा अभिमाति रिति । "इन्द्राय त्वाभिमातिघ्ने"-इत्यत्र देवतान्तरसम्बन्धवैधुर्यं प्रशंसति— "सोमो-द्धारो यथा श्रेष्ठ्येति । यथा धान्यादिभागसमये मुख्यस्य राज्ञो

१— पूर्वलिखिते १-२ टीप्पणद्वितयेऽपि द्रष्टव्ये ।

२— ऋ० सं० ३. ३२. ० ।

द्वयो भाग प्रातिस्विक,[1] तं प्रथम मेवापोद्धृत्य पश्चात् स्व स्व भाग विभजन्ति, एव रुद्रवस्विन्द्रेभ्य देवतान्तरसहभाव मन्तरेण केवल उद्धार कृतो भवति। श्रेष्ठत्वे बीज मभिमातिहन्तृत्वम्। यतोऽय मभिमातिहा, अत उद्धारार्ह इत्यभिप्राय ॥ ९ ॥

"श्येनाय त्वेति। 'श्येनाय त्वा'-'अग्नये त्वा'-इति वाक्यद्वयस्य तात्पर्य माह— "तद् गायत्र्यै मिमीत इति। 'सोमभृते श्येनाय' इति सोमोन्माने कृते गायत्र्यर्थत्व कथ स्यादित्याशङ्क्य तदुपपादयति— "स यद् गायत्री श्येनो भूत्वा दिव सोम माहरदिति। अन्वर्थमितस्य, गायत्र्यर्थत्व तु स्पष्टत्वाद् ब्राह्मणे उपेक्षितम्। तथैव मेवावगन्तव्यम्— "अग्नेर्गायत्र्यभवत्"-इतिमन्त्रवर्णात्[2] गायत्र्या निदान मग्नि, अतो जन्यजनकयोरभेदोपचारे गायत्र्यर्थता स्यादित्यभिप्रेत्य "तद् गायत्र्यै मिमीते" इत्युक्तम् ॥ १० ॥

मानगतपञ्चसङ्ख्या प्रशसति— "अथ यत् पञ्च कृत्वो मिमीत इति। "एकमन्त्राणि कर्माणीति न्यायस्यौत्सर्गिकत्वात् मन्त्राणा पञ्चत्वात्मत्व मपीति पञ्च कृत्व इत्यर्थसिद्धम्। गवामयनादिसत्रस्य सवत्सरसम्मितयज्ञत्व प्रसिद्धम्। 'तस्मात्' 'पञ्च कृत्व' मान प्रशस्तम्। "इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्व प्रतिमन्त्रम्" इति[3] सूत्रम् ॥ ११ ॥

---

१— प्रातिस्विक स्वकीयोऽसाधारण।

२— 'अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सम्बभूव। अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाच मावत्' ऋ० स० १० १३० ४।

३— का० श्रौ० सू० ९ ४ ८।

मितस्य सोमस्य सम्बन्धक मभिमर्शनं विधत्ते— "त मभि-मृशति[1] यत्ते सोम दिवि ज्योतिरिति[2]। हे सोम। 'ते' तव 'यत्' 'ज्योति' द्युतिमत्त्व 'दिवि' अस्ति, यत्' च 'पृथिव्यां' ज्योति' वल्लीरूपः सोम', 'यद्' अपि 'उरौ' विस्तीर्णे 'अन्तरिक्षे' षोडश-कलात्मक', 'तेन' सर्वेण तव स्वरूपेण सहित सन् 'अस्मै' अभि-षुण्वते 'यजमानाय' 'राये' तस्य धनार्थम् 'उरु कृधि' प्रभूत कुरु। तव शरीर मिति शेषः। 'दाचे' हविप्रदात्रे 'अधिवोच.' यज-मानेन वचन मधिवचनम्, मदीयोऽय सर्वथा अनुग्राह्य इति प्रब्रूहीत्यर्थ ॥

सोमस्य लोकान्तरस्थायशम्य यत् परिग्रहाभिधानम्, तदा-ख्यायिकामुखेन प्रशमति— "यच वा एषोऽग्रे देवाना मित्यादिना। 'यच' यत्काले 'अग्रे' सृष्टे' प्राक् 'देवाना' 'हवि' बभूव' सोम', 'तत्' तदा अह 'सर्वेणात्मना' 'देवानां' 'हवि' 'मा भूवम्' न भवामि 'इति' विचार्य, 'एषु' त्रिषु 'लोकेषु' स्वाः 'तनू' 'विन्य-धत्त' विभज्य स्थापितवान् ॥ १ २ ॥

"तदे देवा अस्पृण्वतेति। 'तद्' वृत्तान्त 'देवा' 'अस्पृण्वत'। "स्पृ प्रीतिबलनयो."[3]। बलोपलक्षितव्यापार कृतवन्त', ज्ञातवन्त इत्यर्थः। 'ते' देवाः 'अस्य' अग्नेः 'एताः' लोकत्रयस्थिता 'तनू' 'एतेन' "यत् ते दिवि ज्योति "-इत्यादिमन्त्रेण 'आप्नुवन्' प्राप्त-

---

१— का० औ० सू० ८ ४ ८।        २— वा० स० ६. ३३. १।

३— "स्पृ प्रीतिपालनयो। प्रीतिचलनयोरित्यन्ये। चलन जीवन मिति स्वामी"-इति सि० कौ० स्वा० प० १२ धा०।

वन्त । 'स' 'कृत्स्न एव' अविकल एव 'देवानां हविरभवत्'। "तथो एवैत्यादि, दृष्टान्तवाक्यवद् व्याख्येयम्। "तस्मादेवेति निगमयति ॥ १२ ॥

अथ निग्राभ्योदकै सोमसेचनं विधत्ते— "अथ निग्राभ्याभिरुपसृजतीति[1]। मिश्रयेदित्यर्थः। मिश्रण माख्यामुखेन प्रशंसति— "आपो ह वै वृत्रं जघ्नुरित्यादिना। 'तेनैव वीर्येण' येनाप्यवध्यो वृत्रोऽस्माभिर्हत इत्येवमात्मकेन 'एतर्हि' इदानी मपि 'आपः' 'स्यन्दन्ते' वेगेन गच्छन्ति। यस्मादेव तस्मात् 'स्यन्दमानाः' 'एनाः' आपः 'न किञ्चन' वस्तु, लोष्टकाष्ठपाषाणादिकं 'प्रतिधारयति' प्रतिबध्नाति, किन्तु, 'ताः' आपः 'स्व मेव वशं' स्वतन्त्र यथा भवति तथा विश्रम्भेण 'चेरुः' अगच्छन्। तेषां स्वातन्त्र्ये कारण माह— "कस्मै नु वयं तिष्ठेमहि, याभिरस्माभिर्वृत्रो हत इतीति। सर्वस्यापि लोकस्य घातको वृत्रः, सोऽप्यस्माभिर्घातितः, अतो 'वयं' 'कस्मै' अन्यस्मै 'तिष्ठेमहि' आत्मानं प्रकाशयेमेति। इत्थ मपां स्वातन्त्र्य प्रतिपाद्य, तासा मिन्द्राधीनत्वं प्रतिपादयति— "सर्वं वा इद मिन्द्राय तस्थान मासेति। 'तस्थानम्' इति तिष्ठतेः कानचि[2] रूपम्। कैमुतिकन्यायसिद्ध्यर्थ माह— "अपि योऽयं पवत इति। 'योऽयं' दुर्वहत्वेन प्रसिद्धो वायुः 'पवते', सोऽपि इन्द्राधीनः स्थितवान् किंच, किमु वक्तव्य मेतत् सर्वं मिन्द्रवशे स्थित मिति ॥ १४ ॥

---

१— का० श्रौ० सू० ८. ४. १२।

२— पा० सू० ३. २. १०५, १०६।

"स इन्द्रोऽब्रवीदिति । अथ 'स इन्द्रः' एवम् 'अब्रवीत्' । 'यत्' 'किञ्च' 'इदं' भूतजातं 'मे' मदर्थं स्थितम्, अतो यूय मपि 'तिष्ठध्व मेव' न गच्छत 'इति' । अथ तेन तथोक्ताः 'ताः' आपः, वयं तिष्ठेमहि, 'नः' अस्माकं 'ततः' 'किं' लभ्यं 'स्यात्'? 'इति' अब्रुवन् । अथ ताभ्य इन्द्रः 'सोमस्य राज्ञः प्रथमभक्षं' इतरेभ्यो देवेभ्यः प्राक्, अभिषवकाले 'एव' 'वः' अस्तु 'इति' प्रादात् । 'ताः' अस्तु 'तथेति' अङ्गीकृत्य 'अस्मै' इन्द्राय 'अतिष्ठन्त' ॥

प्रसङ्गात् निग्राभ्याशब्दनिर्वचन माह— "तास्तस्मा उरसि न्यगृह्णीत इति । इन्द्रेणोरसि निगृहीतत्वात् 'निग्राभ्याः' इति तासा मपां नाम सम्पन्नम् । "हृग्रहोर्भश्छन्दसि"-इति[1] हकारस्य भत्वम् । निग्राह्या इत्यर्थः । कर्मणि कृत्यः । तथैवैताः एतद्यजमान उरसि निगृह्णीत इत्यर्थः । अत्र विधिरन्नेयो निगृह्णीयादिति ॥

न चात्र प्रथमभक्षः श्रूयत इत्याशङ्क्य अभिषवकाले ताभिः संसर्ग एव भक्ष इत्याह— "स आसां सेय इति ॥ १५ ॥

उपसर्जनं मन्त्र मभिधाय व्याचष्टे— "स उपसृजति श्वात्रा स्थ वृत्रतुर इत्यादिना[1] । श्वात्र-शब्दस्याभिप्राय माह— "शिवा आप इति । यद्यपि "श्वात्र मिति क्षिप्रनाम[2], "आशु अतनं भवति"-इति निरुक्तम्[4], तथाप्यवरसामान्याद्विर्ब्रूयादितिन्यायेन[3] श्वात्र-

---

१— पा० ७. ३. २ सू० वा० १ ।
२— ऋ० सं० ६. ३४. १ ।
३— निरु० ७. २ १० ।
४— निरु० ५ १ २ ।
५— "अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् नत्वेव न निर्ब्रूयात्"- इत्यादि निरु० २. १. १ द्रष्टव्यम् ।

शब्दविशेषणेन शिवशब्दप्रतिभानात् अपां च सर्वोपायनरूपत्वेन शिवत्वप्रसिद्धे "शाचा स्थेत्यभ्युक्त मित्यर्थं । यस्मात् 'एता' आप वृत्र मघ्नन्' तस्माद् 'वृत्रतुर' इति मन्त्रो ब्रूते । तुर्वी हिंसार्थे[१]। वृत्र तुर्वन्ति घ्नन्तीति वृत्रतुर । 'अमृतस्य' 'पत्नी' पालयित्र्य । यदि यूय ममृता न भवथ, तर्हि तादृशीना मपां स्वामित्व मेव नोपपद्यत इत्यनया प्रसिद्ध्या 'अमृता ह्याप" इति ब्राह्मणम् । प्रसिद्धिवाचक हि-शब्द माह– 'ता देवीर्देवत्रेति । मन्त्रभागस्य स्पष्टार्थता माह– "नात्र तिरोहित मिवास्तीति । इदानीन्तन सोमपानविषय मुपह्वानम् ' उपहूता' सोमस्य पिबतेति मन्त्राभि- धानादायात मिति दर्शयति– ' उपहूता एव प्रथमभक्ष सोमस्य राज्ञो भवन्तीति ॥

मन्त्रस्याय मर्थं सम्पन्न ।– हे निग्राभ्या आप । यूय शाचा स्थ' शिवा भवथ, 'वृत्रतुर' वृत्रस्य हिंसका स्थ 'राध धनस्य 'गूर्त्ता' उद्यमयित्र्य । 'गुरी उद्यमने'[२], 'नसत्तनिपत्तेत्यादिना[३] निपातितो गूर्त्त-शब्द । 'अमृतस्य' 'पत्नी' पालयित्र्य स्थ । अत- स्माद्गुणविशिष्टता' देवी हे देव्य । देवत्रा' देवान् प्रति 'इम यज्ञं सोमात्मक 'नयत प्रापयत, 'उपहूता' अनुज्ञाता' सत्यो यूय 'सामस्य सोम पिबतेति मन्त्रार्थं ॥

' शाचा स्थेत्यभिसृजति निग्राभ्या' इति[४] कात्यायन । १६ ॥

---

१— भा० ए० ५७० धा० । २— तु० धा० १५ धा० ।
३— पा० सू० ८ २. ६१ । ४— का० श्रौ० सू. ८ ४ १९ ।

यदुक्तं तेन "प्रहरिष्यन् द्वेष्य मनसा ध्यायेदमुष्मा अहं वज्रं प्रहरामि, न तुभ्यं सोमेति, अभावे तृणं साभेरिति प्रहरत्येवं त्रिः"-इति[1], तदिदं माह— "अथ प्रहरिष्यन्नित्यादिना। 'अमुष्मै' द्वेष्ट्रे; अत्र सोमशर्मण इति द्वेष्टुर्नाम मनसा गृह्णीयात्, 'प्रहरामि' प्रक्षिपामि, पाषाणरूपं वज्र मिति शेषः। हे सोम। 'न तुभ्य मिति'।

नैव प्रहरणं चेत् को वध इति, तत्राह— "यो न्वेवेमं मानुषं ब्राह्मण मिति। अत्यन्तदोषाविष्करण मितीम ब्राह्मण मिति विशेषितम्। 'तं' ब्राह्मणस्य हन्तारं 'परिचक्षते' 'न्वेव' दुष्ट्वैव। 'परिचक्षाणं' दुष्टत्वेन वर्जनम्, 'अथ' 'किं', वक्तव्य मिति शेषः। 'एतं' माहात्म्यवन्तं पुरोवर्त्तिनं यो हन्ति, तं परिचक्षत इति किमु-तेत्यर्थः। कैमुतिकन्यायस्य बीज माह— "देवो हि सोम इति। हि-शब्दो "देवो वै सोमः"-इत्यादिश्रुतिप्रसिद्धिद्योतनार्थः। अस्तु तथा, यदि हन्ति स्यात्, नैवाच कुत इत्यत आह— "घ्नन्ति वा एत मिति। प्राग् व्याख्यात मिव। 'एतं' शकुनाभिषवपूर्वक मभि-षुण्वन्तः 'तं' सोमं 'न घ्नन्ति'। 'तथा' देवत्वभावनायां सत्याम्। 'अत' अस्माद्ध्ननप्रकारात्, अस्मात् स्थानाद्वा। 'तथा' सति अभिषोतुरध्वर्योः 'अनेनस्त्वं भवति' न विद्यते एनः पापं यस्य स 'अनेना', तस्य भावः अनेनस्त्वम् ॥

द्वेष्याभावे तत् कथ मित्याशङ्क्याह— "यद्यु न द्विष्यादपि तृण मेव मनसा ध्यायेदिति। अमुष्मै तृणाय वज्रं प्रहरामि, हे सोम। न तुभ्य मिति ध्यायेदित्यर्थः ॥ १७ ॥

---

१— का० श्रौ० सू० ८. ६ ११—१६ ॥

प्रहरण मनूद्य मन्त्रं विधाय व्याचष्टे— "स प्रहरति माभेरित्यादिना[1]। मा भेरिति पदं व्याकुर्वन्नेव द्वेष्यत्वभावनायां यत् प्रयोजन प्रागुक्तम्, तदेव माभेरिति मन्त्रभागस्यापि तत्त्वर्थ मिति व्याचष्टे— "माभेर्मा संविक्था इति, मा त्वं भैषीर्मा संविक्था अमुष्मा अहं प्रहरामि, न तुभ्य मित्येवैतदाहेति। 'एतत्' माभेरिति मन्त्रवाक्यम्। ऊर्क्-शब्दस्यान्ननामसु[2] पाठात् अन्नात्मसारो रसो विवक्षित इति व्याचष्टे— "रस" धत्स्वेत्येवैतदाहेति। "धिषणे वीड्वी"-इतिमन्त्रभागस्य धिषणफलके अर्थ इति केषाञ्चिदाचार्याणां मतम्, तन्मत निराकर्त्तु मुदाहरति— "इमे एवैतत् फलके आहुरित्यु हैक आहुरित्यादिना। प्रथमम् 'आहु'-इतिशब्दस्य पदानि 'धिषणे'-इत्यादीनि। 'एतत्' एतस्मिन् वाक्ये 'इमे' सोमाधारभूते 'फलके' ब्रुवते इत्यर्थः। 'इति' अमु मर्थ मेकशाखिन आहु। 'नु' प्रश्ने। 'किं' 'तत्' त्वदभिमते, विद्यत इति शेष। भिद्यत एवेत्याशङ्क्याह— "योऽप्येते फलके भिन्द्यादिति। यद्येते च द्वे स्याता, नहिं कदाचिदपि भग्ने स्याताम्, अत किन्तु तन्नेत्यर्थः ॥

इदानीं स्वाभिमत मर्थं सोपपत्तिक दर्शयति— "इमे ह वै द्यावापृथिवी इत्यादिना। अत्र धिषणे अनूद्येते, तयोर्दार्ढ्यं माशास्यते, तच्च सति शैथिल्यकारणे उपपद्यते, अतस्तत्प्रसक्ति माह— "एतस्माद् यज्ञादुद्यतात् समेजेत इति। वज्रवद्भिमकात् अभिषवार्थोद्यतग्रावसमकाशात् 'इमे द्यावापृथिवी' 'समेजेते' कम्पेते। 'द्यावा-

---

१— वा० सं० ६ ३५ १। २— निघ० २ ७ १५।

पृथिवीभ्याम्' इति चतुर्थीद्विवचनम्। 'एतत्' इदानीम्, आभ्या-मर्थाय 'एनं यज्ञं 'शमयति' शान्तं करोति, यथासौ उत्सेकावचे-पाभ्यां द्यावापृथिव्यौ न हिनस्ति तथा करोति। 'तथा' सति, "धिषणे विड्वी वीडयेथाम्"-इत्यभिधाने सति 'शान्तः' असौ यज्ञ इति 'इमे' द्यावापृथिव्यौ 'न हिनस्ति', प्रोत्साहनेन तयोर्दृढत्वस्य प्राप्तत्वादिति भावः। गतः अर्थवादः। "पाप्मा हतो न सोम इति तदस्य सर्वं पाप्मानं हन्तीत्यर्थवादिकं फलं मा मा सन्ताप्सीरिति च देवतास्तुतस्य सोमस्याभिषवरूपो वधोऽध्वर्य्योरेव सम्भावित इति तस्यैवेति मन्तव्यम् ॥ १८ ॥

यदुक्तं कात्यायनेन— "पञ्च चिरभिषुणोति[1]"-इति, तदिदं चित्व विधाय सम्भरणनिग्राभोपायनयोः सङ्ख्यया सह समुच्चित्य प्रशंसति— "स वै त्रिरभिषुणोतीत्यादिना। 'त्रिः सम्भरति त्रिः सन्निपीड-यति। निग्राभोपायनम् प्रागपादित्यादिमन्त्रजपः तत् चतुर्वारं कर्त्तव्यम्। 'तत्' मिलित्वा 'दश' सम्पद्यन्ते विराटछन्दसश्च दशा-क्षराणि सोमोऽपि विराट्सम्बन्धी 'पञ्च हस्तो यजुषा मिमीते, पञ्चहस्तत्वरूपौ मितिः दशसङ्ख्यया मितत्वात्, अतो वैराजस्य सोमस्य समवाय अभिषवादिगता दशसङ्ख्या प्रशस्ता। ततोऽत्र सम्भरणचित्वस्य निग्राभोपायनचतुष्टयस्य च विधिर्निर्देशादेव द्रष्टव्य[2] ॥ १९ ॥

---

१— का० श्रौ० सू० ९ ४ १६ स।

२— त्रिरभिषवे प्रहारसङ्ख्या का० श्रौ० ९ ४ १०—१९ सूत्रेषु द्रष्टव्या, इहापि चतुर्थकाण्डे (१ १ २४, २६ ) किञ्चिद् वक्ष्यति।

अथ नियाभोपायन मनूद्य प्रशंसति— "अथ यन्नियाभ मुपैति, यत्र वा एषो ऽग्रे देवाना हविर्बभूवेत्यादिना । "इमा दिशो-ऽभिदध्याविति । अभिध्यान मैथुनविषय ध्यानम् । अभिध्यानप्रकार माह— "आभिर्दिग्भिरिति । 'मिथुनेन' तद्योगेन, 'प्रियेण' दिशा मभिमतेन, 'धाम्ना मम शरीरेण 'मस्पृशेयेति' । यदा, 'दिग्भि मिथुनेन प्रियेण धाम्ना' दिशां मिथुनाईण प्रियेण धाम्ना शरी-रेण मस्पृशेयेति व्याख्येयम् । एवङ्काभयमानस्य सोमस्य नियाभो-पायनेन देवा' 'आभिर्दिग्भि' सह 'मिथुनेन प्रियेण धाम्ना' 'समस्पर्शयन्' सयोग मकारयन्, नियाभ्योपायन मेव करणं इत्यर्थ । "तथो एवैन मिति, दार्ष्टान्तिक वाक्यम् दृष्टान्तवद् व्याख्येयम् । यदा, पूर्वत्र सद्याविधि स, 'यन्नियाभ मित्यत्र तु यच्छब्द मुपेक्ष्य विधिरवगन्तव्य ॥ १० ॥

तत्र मन्त्र विधाय प्रशंसति— "स उपैति[1] प्रागपानित्या-दिना[2] । अपाग्नतीत्यपाक्, प्रतीची दिक् । 'अधरागिति, उदग् प्रतियोगिनी दक्षिणा दिगुच्यते' ॥ ११ ॥ ॥ ११ ॥

अथ सोमस्याभिषवप्रकरणादिप्रसङ्गाद् यज्ञनामनिर्वचन दर्श-यति— "अथ यस्माद् यज्ञो नामेति । यस्मात्' प्रवृत्तिनिमित्तात् यज्ञस्य 'यज्ञ' 'इति 'नाम' अभूत् । तस्योत्तरम्— "घ्नन्तीत्यादि । अभिषवेन हतम् 'एन सोम 'तन्वते' प्रचारणग्रहणहोमादिना

---

१— का० श्रौ० सू० ८. ५ ०० । २— मा० स० ६ १६ ६ ।
६— मा० सु० ४ ५ १० इत्यत्र ।

विस्तारयन्तीति यावत्, तदेव तस्य पुनरुत्पादनम्। 'स' सोम 'तायमान' सन् 'जायते', अतो यत् परम्परया आकृतिभाव गच्छन् 'जायते' पुन पुन सम्भवति, अतो यन् जायत इति 'यज्ञ'। अतो वस्तुतो 'यज्ञ'-इति तस्य 'नाम', 'तद् यज्ञ इति' परोक्षेण व्यवहरन्ति[1] ॥ २३ ॥

उक्तार्थसंवादत्वेन सोमप्रार्थनारूप मन्त्रसंवाद दर्शयति— "तत्रैता नपि वाच सुवाद, त्व मङ्ग प्रशंसिष इति[2]। 'तत्र' तस्मिन् अभिषवकाले 'एता' प्रार्थनारूपां त्वमङ्गेति 'वाचम्' 'उवाद' उक्तवान्। हे 'शविष्ठ!' अतिशयेन बलवन्। 'अङ्ग' हे इन्द्र! 'देव' 'त्व' 'मर्त्य' मरणधर्माण मा सोम 'प्रशंसिष' प्रशस्त कुरु, आकृत्यात्मना विस्तारयन् देवात्मना पुनरुत्पादयेत्यर्थः। "शसु स्तुतौ"[3], 'सिब्बहुल लेटि"-इति[4] सिप्, आर्द्धधातुकत्वादिट्[5] "इतश्च लोप,"-इतीकारलोप[6], "लेटोऽडाटौ"-इत्यडागम[7]। अत्यन्तो देव किमिन्द्रप्रार्थनयेति तत्राह— 'हे 'मघवन्!' त्वत् 'त्वत्' 'अन्य' 'मर्डिता' सुखयिता 'न अस्ति', यत एवम् अत 'ते' तुभ्य

---

१— "यज्ञ कस्मात्? प्रख्यात यजतिकर्मेति नैरुक्ता, याच्ञो भवतीति वा, यजुरुन्नो भवतीति वा, बहुकृष्णाजिन इत्यौपमन्यव, यजूंष्येनं नयन्तीति वा"-इति निरु० २। २।

२— वा० स० ६। ३७। १।  ३— भा० पृ० ७२८ धा०।

४— पा० सू० ३। १। ३४।  ५— पा० सू० ७। २। ३५।

६— पा० सू० ३। ४। ९७।  ७— पा० सू० ३। ४। ९४।

'वचः' प्रश्नप्रार्थनारूपम् 'ब्रवीमि'। अस्य मन्त्रस्य तात्पर्य माह— "मर्त्यो हैवैतद् भवन्नुवाच,[1] त्व मेवैनो जनयितासि नान्यस्त्वदिति। स्पष्टोऽर्थः ॥ २४ ॥

अथ निग्राभ्याभ्योऽद्भ्यो होतृचमसेन ग्रहणम्, तत् प्रशंसति— "अथ निग्राभ्याभ्यो ग्रहान् विगृह्णन् इति[2]। 'निग्राभ्या.' अभिषव-समये सोमोपसर्गायोपयुक्ता आपः। कथं ताभ्यो ग्रहण मिति पर-स्परयेति दर्शयति— "आपो ह वै वृत्र जघ्नुरित्यादिना। वीर्यवत्य' स्यन्दमाना आपः, ताभ्यो वसतीवरीणां ग्रहणम्, ताभ्यश्च होतृ-चमस-निग्राभ्याणां ग्रहणम्, निग्राभ्याभ्यः सकाशात् सोमरसद्वारा ग्रहान् विगृह्णते। तदा 'तेनैव' हृचवधप्रयुक्तसामर्थ्येनैव 'एतत्' एतेन निग्राभ्याभ्यो 'ग्रहान् विगृह्णते'। तत्र ग्रहणं होतृचमसस्का-शाद् भवति, होतृचमसं दशापवित्रस्योपरि धारयित्वा, तत्र सोम-रस मासिच्य, धारां सम्पाद्य ग्रहणात्। 'योषा वै' स्त्री खलु 'ऋक्', सैव 'होता'; ऋचः शस्त्राद्यवयवरूपायाः होतृशयोऽन्यत्वात् अभेदविवक्षया ऋग्घोतेति सामानाधिकरण्यम्। "तदेन मेतस्या इति। 'एतस्यै योषायै' षष्ठ्यर्थे चतुर्थी[3]। एतस्या योषायाः ऋग्घोतृ-लक्षणायाः सम्बन्धितया 'एनं' सोमम् 'एतद्' एतेन होतृचमसाद् ग्रहणेन 'प्रजनयति' पुनरुत्पादयति। "तस्माद्धोतृचमसादिति।

---

१— 'भगवन्नुवाच(?)'–इति च।

२— का० श्रौ० सू० ८. ४ २०, २१, २२।

३— पा० २. ३. ६२ सू० वा० १।

पुनर्निर्गमनम् । तस्मात् नियाभ्योदकैर्वारुचमसेन यष्टान् गच्छे-यादिति विधिः[1] ॥ २५ ॥ ५ [९. ४.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमाध्याये चतुर्थं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ९ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताम्भोन् पञ्चसीरीस्विदग्नतरुलताधेनुसौवर्णभूमीः ।
रत्नोर्वां रुक्मवाजिद्विपमहितरथौ साधयिः विश्वमायौ,
स्वश्राणोद्विश्वचक्र प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीय कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
श्वाज्योत्थं भाग्यजन्मा लवणज मनृणः शार्करं शार्कतेजाः,
रत्नाढ्यो रत्नरूप गिरि मकृत मुदा याचकाविष्ननार्थः ॥

---

१— तत्रत्यारस्तु ग्रहकाण्डेऽनुपद मेव स्फुटियतीति ध्रम् ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमाध्यायः समाप्तः ॥ ९ ॥

॥ इति तृतीयकाण्डे सप्तमः प्रपाठकश्च समाप्तः[1] ॥

॥ इत्यध्वरं नाम तृतीयं काण्डं समाप्तम्[2] ॥

---

१— 'कण्डिकासङ्ख्या ११४'–इति क, "कण्डिका ११४"–इति ख, "कण्डिकासङ्ख्या ११४"–इति ग, घ। तत्र १ ब्रा० ११ क०, २ ब्रा० २० क०, ३ ब्रा० १७, ४ ब्रा० ३३ क०, ५ ब्रा० २५ क०, सङ्कलनयात्र प्रपाठके ११४ कण्डिका सम्पन्ना ।

२— "कण्डिकासर्वसङ्ख्या ८५९"–इति क, 'अस्मिन् काण्डे कण्डिकासङ्ख्या ८५९' –इति ख, तथैव ग, घ। तत्र प्रथमे प्रपाठके १२७, द्वितीये १२८, तृतीये १०२, चतुर्थे १३२, पञ्चमे १२७, षष्ठे ११२, सप्तमे ११४ सर्वसङ्कलनयात्र काण्डे ८५९ कण्डिका भुता इति सिद्धम् ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरहरिहरभूपालसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमाध्याय समाप्त ॥ ९ ॥

॥ इति तृतीयकाण्डे सप्तमः प्रपाठकश्च समाप्तः[1] ॥

॥ इत्यध्वरं नाम तृतीयं काण्डं समाप्तम्[2] ॥

---

१— “कण्डिकासङ्ख्या ११४”-इति क, ‘कण्डिका ११४’-इति ख, “कण्डिकासङ्ख्या ११४”-इति ग, घ। तत्र १ ब्रा० ११ कं० २ ब्रा० २७ कं०, ३ ब्रा० १७, ४ ब्रा० ३४ कं०, ५ ब्रा० २५ कं०, तद्गुण नयात्र प्रपाठके ११४ कण्डिका सम्पद्यते ॥

२— “कण्डिकासर्वसङ्ख्या ८५९”-इति क, “अस्मिन् काण्डे कण्डिकासङ्ख्या ८५९”-इति ख, तथैव ग, घ। तत्र प्रथमे प्रपाठके १२४, द्वितीये ११८, तृतीये १०२, चतुर्थे १३२ पञ्चमे १२७, षष्ठे ११२, सप्तमे ११४, सर्वसङ्कलनयात्र काण्डे ८५९ कण्डिका सन्ति इति सिद्धम् ।